गंम्भीरवंशजविरचितं

# न्यायसूत्रविवरणम्

# NYAYASŪTRA VIVARAṆAM
OF
GAMBHĪRAVAMŚAJA

*Critically Edited by* :
Vidwan, ANANDATEERTHA V. NAGASAMPIGE




ORIENTAL RESEARCH INSTITUTE
UNIVERSITY OF MYSORE
MYSORE
1992

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES No. 181

मैसूरु विश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला — १८१

गम्भीरवंशजविरचितं

# न्यायसूत्रविवरणम्

# NYĀYASŪTRAVIVARAṆAM

OF

GAMBHĪRAVAMSAJA

प्राच्यविद्यासंशोधनालयः, मैसूरु
ORIENTAL RESEARCH INSTITUTE, MYSORE
1992

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला — १८१

गम्भीरवंशजविरचितं

# न्यायसूत्रविवरणम्

प्रधानसम्पादकः
विद्यावाचस्पतिः डा. आर्. एस्. शिवगणेशमूर्ति, एम्.ए., पि.एच्.डि.
निर्देशकः, प्राच्यविद्यासंशोधनालयः
स्नातकोत्तरसंस्कृताध्ययनसंशोधनविभागाध्यक्षः
मानसगङ्गोत्री, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु
१९९२

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES-181

# NYĀYASŪTRAVIVARAṆAM

OF

GAMBHĪRAVAMSAJA

General Editor
Vidyavachaspati Dr. R. S. SHIVAGANESH MURTHY,
M.A., Ph.D.
Director, Oriental Research Institute, Mysore
Professor and Chairman Dept. of P. G. Studies and
Research in Sanskrit, Manasagangotri, Mysore.

ORIENTAL RESEARCH INSTITUTE
MYSORE-570005
1992

प्राच्यविद्यासंशोधनालयग्रन्थमाला— १८१

गम्भीरवंशजविरचितं

# न्यायसूत्रविवरणम्

सम्पादकः
न्यायवेदान्तशास्त्रविद्वान्
आनन्दतीर्थ वि. नागसम्पिगे
सहायकसंशोधकः
प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु
१९९२

UNIVERSITY OF MYSORE

ORIENTAL RESEARCH INSTITUTE SERIES-181

# NYĀYASŪTRAVIVARAṆAM

OF

GAMBHĪRAVAMSAJA

Editor

Nyayavedantavidwan

ANANDATEERTHA V. NAGASAMPIGE

Research Assistant

Oriental Research Institute, Mysore

ORIENTAL RESEARCH INSTITUTE, MYSORE

1992

# PREFACE

I am happy to place in the hands of scholars this volume, Nyayasutra-Vivarana, which is the second work to be published by this Institute in the field of Nyayadarsana. The other work published is Nyayamanjari of Jayantabhatta.

Nyayasutra of Gautama, a commentary on which is printed here, is the basic text for Nyayadarsana. The date of Nyayasutra is controversial and perhaps 5th century B.C. can be accepted as more probable. On this work is the celebrated commentary of Vatsyayana followed by a series of commentary on commentary. Authors of some of these commentaries have also written independent work.

Nyaya-darsana addresses itself primarily to the question of the theory of knowledge. It is called pramana-sastra. It discusses the nature of knowledge, the agent of knowledge, ways of knowing, validity of knowledge and other related topics. The Nyayasutra also deals with the mode of disputation and the methodology of argumentation. Nyaya-darsana provided the basic pattern for the theory of knowledge and all other systems of Indian philosophy have adopted it to build their own epistemological structure.

The present text is a commentary on Gautam's Nyayasutra. The name of the commentator is unfortunately lost to us. We only know that he belonged

to Gambhira family; he calls himself Gambira-vamsaja We also learn from his statement that he was a master of Veda and Sastras. He was a resident of Punya-Kara-pura which is not identifiable. The Adyar manuscript has a different reading for this.

The commentary, called simply 'Vivarana', does not drag on the discussion. Explanations are as much as necessary to understand the implications of the sutras.

The edition is based on the single copy of the 'Vivarana' available in our Institute. Later it was found that Adyar Library and Kerala University Library have one copy each. Our effort to consult them is yet to be fulfilled. Now that the printing is over it was decided to issue the book and to print the various readings from the other copies with notes in the pages of our annual journal, The Mysore Orientalist. We beg the pardon of scholars in not being able to incorporate the evidence of all manuscripts in this volume.

The editor of the text, Vidwan Anandatirtha Nagasampige has done his best in giving a correct text. He has added some notes on points not clear in the commentary.

I take this opportunity to thank the Vice-Chancellor, Prof. M. Madaiah and other authorities of the University for their support to the activities of the Institute.

Sri Ahmed Hussain of Malik Power Press deserves our thanks for the neat production of the work.

R. S. SHIVAGANESHA MURTHY
DIRECTOR

July, 1992

# प्रस्तावना

अत्यन्तं हृष्यति मे मनः यत् न्यायसूत्रविवरणनामकोऽयं ग्रन्थः प्राच्यविद्यासंशोधनालयात् प्रकाशं नीयत इति । अयं च ग्रन्थः प्राच्यविद्यासंशोधनालयग्रन्थमालायाः एकशताधिक-एकाशीतितमं (१८१) पुष्पम् । पुष्पस्यास्य सौरभेण विद्वन्द्वृन्दः तोषं प्राप्नोत्विति विभावये ॥

असौ संशोधनालयः शास्त्रग्रन्थान् तथा साहित्यग्रन्थान् अपूर्वार्थगर्भितान् अप्रकटितान् संशोध्य प्रकटयति । अत्रत्याः विद्वांसः समग्रभरतखण्डं सञ्चार्य अपूर्वाः अमूल्याः हस्तप्रतीः सङ्गृह्णन्ति । तथा सङ्गृहीतानां तासां संरक्षणम् संशोधनार्थं स्वीकरणम्, प्रकटनम्, सूक्ष्मचित्रीकरणद्वारा एतासां स्थिरीकरणञ्च अस्यास्संस्थायाः प्रधानं कर्म । वर्तन्ते चात्र एकादशसंख्याकाः शास्त्रविदः तथा साहित्यविदश्च विद्वांसः । ते च ग्रन्थसम्पादनकर्मणि समर्थाः एतादृशानपूर्वार्थगर्भितान् ग्रन्थान् सम्पादयन्ति ।

प्रकृते च प्रकाशपदं नीयमानः न्यायसूत्रविवरणनामकोऽयं न्यायशास्त्रग्रन्थः । ग्रन्थस्यास्य रचयिता गम्भीरवंशजः । वर्तते च न्यायशास्त्ररूपनद्याः प्रवाहद्वयम् । प्राचीनन्यायशास्त्रम् इति एकप्रवाहः । नवीनन्यायशास्त्रमित्यपरः प्रवाहः । प्राचीनन्यायशास्त्रस्य प्रवर्तकः गौतमर्षिः । स तु न्यायसूत्राणि निबबन्ध । तानि च सूत्राणि गौतमन्यायसूत्राणीत्येव प्रसिद्धानि । तेषां सूत्राणां भाष्यकारः वात्स्यायनः । भाष्यस्य वार्तिककारः उद्योतकरः । वार्तिकस्यापि व्याख्याता वाचस्पति-

मिश्रः । तस्यापि वार्तिकस्य व्याख्याता उदयनाचार्यः । एवं प्राचीन-न्यायशास्त्रे व्याख्यानोपव्याख्यानानां प्रवाहः प्रवहितः ।

नवीनन्यायशास्त्रस्य प्रवर्तकः गङ्गेशोपाध्यायः । तत्त्वचिन्तामणि-नामकः ग्रन्थः तेन व्यरचि । तस्य च चिन्तामणेः व्याख्या दीधितिनाम्नी रघुनाथशिरोमणिना रचिता । तस्याः दीधितेः व्याख्यात्रयं वर्तते । मथुरानाथेन रचिता माथुरीनामिका प्रथमा । जगदीशेन कृता जागदीशी नामिका द्वितीया । गदाधरेण रचिता गादाधरीनामिका तृतीया । एवं नवीनन्यायशास्त्रस्य प्रवाहः ।

प्रवाहयोरेतयोर्मध्ये आद्यस्य प्रवाहस्य प्रवर्तकः योऽयं गौतमः तेन रचितानि न्यायसूत्राण्यधिकृत्य गम्भीरवंशजेन व्याख्या निर्मिता । तस्याः व्याख्यायाः नाम 'न्यायसूत्रविवरणम्'—इति । पञ्चाध्यायात्मिकानि न्यायसूत्राण्यसौ ग्रन्थकारः सुमधुरया पाण्डित्यपूर्णतया च शैल्या व्याख्यातवान् । व्याख्यानस्यादौ स्वयमेव वदति ।

“[1]पुण्डरीकपुरश्लाघ्यो वेदशास्त्रार्थकोविदः ।
गम्भीरवंशजश्चक्रे न्यायवार्तिकसङ्ग्रहम् ॥” इति ।

---

[1] ग्रन्थस्यास्य सम्पादकः “प्राक्कथने” “पुण्यकरपुरश्लाघ्यः’ ’ इति पाठं स्वीकृत्य ‘पुण्यकरपुरं=पुण्यपत्तनम्” प्रायः भवेत् इति विवृतवान् । अतोऽपि मूलग्रन्थे “पुण्यकरपुरश्लाघ्यो” इत्येव मुद्रितं वर्तते । परन्तु परस्तात् विशेषतः हस्तप्रतिसंशोधनसमये अत्रत्यमातृकायां, तथा ‘त्रिवेण्ड्रं’ प्राच्यहस्तप्रतिसङ्ग्रहालये विद्यमाना या मातृका तस्याः विवरणात्मकसूच्यव-लोकने च “पुण्डरीकपुरश्लाघ्यो” इति पाठः दृष्टः । पाठश्चायं उपयुक्त

श्लोकेनानेन ज्ञायते गौतमसूत्राणां ये व्याख्याने आस्तां न्यायभाष्यं, न्यायवार्तिकम् इति ताभ्यां प्रभावितः तयोरभिप्रायं स्वीकृत्यायं नूतनशैल्या स्वाभिप्रायसंयोजनेन सूत्राणि व्याख्यातवानिति। न्यायवार्तिकसङ्ग्रहकर्ता चायं क्वचित् भाष्यवार्तिकाद्युक्तप्रमेयस्य विवरणं करोति। क्वचित् विस्तरेणोक्तस्य संक्षेपं करोति। क्वचित् अनुक्तार्थं ज्ञापयति। क्वचित् प्रमाणपुरस्सरं उक्तार्थं दृढीकरोति। एवमाद्यनेकप्रकारेण गम्भीरया शैल्या सूत्रार्थान् विवृणोति। सूत्रार्थकथनसन्दर्भे यत्र स्वाभिप्रायस्य भाष्यविरोधस्सम्भवति तत्र भाष्याभिप्रायं परित्यज्य स्वाभिप्रायमेव प्रकटयति। यथा 'संशयकारणानि पञ्च' इति भाष्यकारेणोक्तमनङ्गीकृत्य त्रीण्येव संशयकारणानीति प्रतिपादितवान्। एवं स्वबुद्धिप्रवेशेन सूत्रार्थः यथा सुस्पष्टं भवति तादृशी शैली अनेनादृता वर्तते। एतादृशेन विबुधेन रचितः इदानीं प्रकाशपदं नीयमानोऽयं ग्रन्थः विद्वज्जनानां तोषाय भूयादित्याशासे॥

ग्रन्थस्यास्य संशोधनसम्पादकः नागसम्पिगे इत्युपाह्वयः विद्वान् आनन्दतीर्थः। अयन्तु प्राच्यविद्यासंशोधनालये विद्यमानायाः हस्तप्रतेः साहाय्येन ग्रन्थमिमं संशोधितवान्। यत्र ग्रन्थपातः तत्र शुद्धपाठनिर्णयार्थं श्रद्धापूर्णः यत्नः कृतः। यत्र च अस्पष्टता तत्र उपयुक्तटिप्पणीः रचितवान्।

---

इति स एव मयात्र निर्दिष्टः। "पुण्डरीकपुरं" इति प्राचीनचित्रकोशस्थ (मराठी) भारतभूपटे तापसाश्रमस्य नाम आसीदित्युपलभ्यते। तदाधारतया इदानीन्तनमहाराष्ट्रप्रान्ते 'पुण्डरीकपुरं' इति एकं पत्तनं आसीत् तवत्योऽयं ग्रन्थकारः स्यात् इति ऊहितुं शक्यते॥

आधुनिकसंशोधनमार्गमनुसृत्य विद्वत्पूर्णतया ग्रन्थमिमं संशोध्य अध्येतॄणां पुरतः समर्पितवान् ।

अयञ्चानन्दतीर्थः न्यायशास्त्रे तथा द्वैतवेदान्तशास्त्र प्राप्तविद्वत्पदः वेदान्तशास्त्रे लब्धसर्वप्रावीण्यश्च । तथा तिरुपतिदेवस्थानसंसत्सकाशात् प्रचलितद्वैतवेदान्तपरीक्षायां प्रथमश्रेण्यामुत्तीर्णः । अनेन कर्नाटकभाषाया-मनूदिताः पञ्चषशास्त्रग्रन्थाः मुद्रिता वर्तन्ते । संशोधिताः द्वित्राः ग्रन्थाश्च अन्यसंस्थाद्वारा मुद्रिताः । कर्नाटकभाषायां तथा संस्कृतभाषायां विंशत्य-धिकलेखनान्यनेन लिखितानि मुद्रितानि च । अखिलभारतसंस्कृतशास्त्रीय भाषणस्पर्धासु भागमूढ्वा सुवर्णपदकान्यनेन लब्धानि । सदाध्ययन-शीलोऽसौ शास्त्रीयोपन्यासकलायां निपुणः । अद्यावधि शताधिकोपन्यासान् कृत्वा विद्वज्जनैः लब्धप्रशंसश्च । एतादृशाः विद्वांसः अस्मिन् संशोधनालये वर्तन्त इति महदिदं प्रमोदस्थानम् ॥

सुधीविधेयः

'पण्डितरत्नं' 'वेदान्तभूषणं' 'विद्यावाचस्पतिः'

'वेदान्तसमर्थः' न्यायवेदान्तविद्वान्

आर्. जि. मालगि, एम्.ए.,

दिनाङ्कः ७-१-९३ उपनिर्देशकः

मैसूरु प्राच्यविद्यासंशोधनालयः

ॐ

# प्राङ्निवेदनम्

विद्यास्थानानि

प्राक्तनेषु हि ग्रन्थेषु अङ्गिभूताश्चत्वारो वेदाः, शिक्षाव्याकरणादीनि षडङ्गानि, पुराणन्यायमीमांसाधर्मशास्त्राणि चैतानि चतुर्दशविद्यास्थानान्युक्तानि[1] ।

प्रवाहतो अनादय इमा विद्यास्सम्प्रदायप्रवर्तकैः सम्यक्प्रवर्तिताः पालिताश्च । आह चानन्दतीर्थभगवत्पादाचार्यः—

"अनादिकालतो वृत्तास्समया हि प्रवाहतः ।
न चोच्छेदोऽस्ति ...............''[2] इति ।

पार्थसारथिमिश्रोपि—

"एवंविधाश्च ग्रन्थाः प्रतिमन्वन्तरं येन केनचित् क्रियमाणाः सर्वं

---

[1] पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

याज्ञवल्क्यस्मृतिः 1-3

विष्णुपुराणे च—

अङ्गानि चतुरो वेदाः मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥



[2] ब्रह्मसूत्रानुव्याख्यानम् अ. 2 पा. 2 p 400

कालमविच्छिन्नपारम्पर्येण प्रवर्तन्ते "[1] इत्याह ।

एवं च वेदाः, वेदाङ्गानि, उपाङ्गादयो यथाकालं आचार्यपुरुषैरधीताः, व्याख्याताश्च, स्वीयमतिवैभवेन । एतादृशेषु आचार्यप्रवरेषु पूज्यतमो दीर्घदर्शी गोतमः श्रेष्ठतमः ।

## न्यायविस्तरस्य स्थानं उपयोगश्च ।

न्यायशास्त्रमिदं गोतमीयं वेदाप्रामाण्यनिरसनद्वारा सर्वविद्योपकारकत्वेन याथार्थ्येन वस्तुस्वरूपपरिचायकतया च उपयुक्तं समेषां दार्शनिकानाम् । यथा चाह जयन्तभट्टः—

"न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानां वेदप्रामाण्यहेतुत्वात् । वेदेषु हि तार्किकरचितकुतर्कविप्लावितप्रामाण्येषु शिथिलितास्थाः कथमिव बहुवित्तव्ययायासादिसाध्यं वेदार्थानुष्ठानमाद्रियेरन् साधवः ? किं वा तदानीं स्वामिनि परिम्लायमाने तदनुयायिना मीमांसादिविद्यास्थानपरिजनेन कृत्यम् । तस्मादशेषदुष्टतार्किकोपमर्दद्वारकदृढतरवेदप्रामाण्यप्रत्ययाधायि न्यायोपदेशक्षममक्षपादोपदिष्टमिदं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति परं विद्यास्थान"[2]मिति ।

वात्स्यायनोऽपि प्रमेयजातस्य यथार्थस्वरूपपरिचायकतया प्रदीपवत्सर्वविद्योपकारक इति न्यायविस्तरस्योपयोगमाह—

---

[1] शास्त्रदीपिका p 39



[2] न्यायमञ्जरी p. 3-4

"प्रदीपः सर्वविद्यानां उपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥"

मनुरपि तर्कानुसन्धानस्य आवश्यकतामेवमाह—

"आर्षं धर्मोपदेशं च वेदशास्त्राऽविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥" इति ।

प्रमाणैरर्थपरीक्षणं हि 'तर्क' शब्दार्थः । यस्मिन् शास्त्रे प्रमाण-प्रमेय-संशयादिपदार्थस्वरूपादिकं यथाप्रमाणं विमृश्यते तत्तर्कशास्त्र-मित्युच्यते । न्यायशब्दोऽपि तत् समानार्थ एव । वात्स्यायनोऽप्येतमेवा-र्थमाह 'न्याय'पदेन । "प्रमाणैरर्थपरीक्षणं न्याय" इति । आह च वर्धमानोऽपि— विवक्षितं तत्त्वं नीयते प्राप्यतेऽनेनेति न्यायः' इति । ततश्च पदार्थतत्त्वज्ञानार्थमस्य शास्त्रस्य अध्ययनमावश्यकमेवेत्युक्तं भवति ।

न्यायसूत्रकर्ता गोतमः

पञ्चाध्यायात्मकन्यायसूत्रप्रणेता, किं गोतमः उत गौतम इत्यत्रै-वास्ति विदुषां विप्रतिपत्तिः । निरवकाशनिर्णायकबलाच्चास्य गोतमशब्द-वाच्यत्वं निश्चिनुमः । तथाहि—

(१) "एषा मुनिप्रवरगोतमसूत्रवृत्ति"रिति न्यायसूत्रवृत्तौ गोतम इत्येव व्यवहरणात् ।

(२) वेदादिशास्त्रव्याख्याता माधवाचार्योऽपि "तत्र प्रथमाध्यायस्य प्रथमे आह्निके भगवता गोतमेनप्रमाणादिपदार्थनवकलक्षणनिरूपणं

विषाय[1] " इति वदन् गोतम इत्येव नाम निर्दिदेश ।

(३) तारानाथतर्कवाचस्पतिना वाचस्पत्यकोशे न्यायशब्दव्याख्याना-वसरे प्रकृतशास्त्रस्य गोतमप्रणीतत्वं प्रत्यपादि[2] ।

(४) पाद्मपुराणेऽपि गोतम इत्येव नाम निर्दिष्टम्[3]—

"कणादेन च सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।
गोतमेन तथा न्यायं साङ्ख्यं च कपिलेन वै" ॥ इति ।

(५) श्रीहर्षोऽपि—

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेत्यैव .... .... यथा वित्थ तथैव सः ॥

इत्याह[4] ।

(६) गोतमः स्वेन तर्केण खण्डयन् तत्र तत्र हि ।
(स्कान्दपुराणे कालिकाखण्डे सप्तदशोऽध्यायः)

(७) गाधर्वतन्त्रे एवं वचनव्यक्तिर्दृश्यते—

---

[1] सर्वदर्शनसङ्ग्रहः, अक्षपाददर्शनम् p. 234 B. O. R. I Edition—1924.

[2] (न्यायः) "गोतमप्रणीतषोडशपदार्थनिरूपके शास्त्रभेदे" वाच-स्पत्यम् Vol. V p 4155

[3] पाद्मपुराणम् ; उत्तरखण्डः अध्याय 207



[4] नैषधीयचरितम् 17-75

गोतमप्रोक्तशास्त्रार्थनिरताः सर्वे एव हि ।
शार्गालीं योनिमापन्नाः सन्दिग्धाः सर्वकर्मसु ॥[1]

(८) एवं [2]मत्स्यपुराणशब्दकल्पद्रुमादिभिश्चास्य गोतम इत्येव नाम निर्णेतुं शक्यते ।

गोतमस्य कालविषयेऽपि दुष्परिहरोऽस्ति विवादः । गोतमः कुत्रत्य इत्यत्रापि न निर्णीतिर्विद्वत्सु । तत्रैतिह्यशरणाः केचन एवं मन्वते । मिथिलानगरस्यानतिदूरे इदानीन्तनदर्भङ्गातः पूर्वस्यां दिशि गौतमस्थाननामकः ग्रामः विद्यते । तत्र चैत्रमासे नवम्यां उत्सवः प्रचलति । तपसा तप्तस्य पिपासार्दितस्य गोतमस्यानुग्रहार्थं तत्र देवताः जलागारमेकं निर्मिमिरे । 'गौतमकुण्ड' इति तस्याख्या । तत्रत्यं जलं क्षीरमिवातिमधुरं विद्यते । 'क्षीरोदधि'रित्यपरं चास्य नाम श्रूयते । गौतमोऽहल्यापतिः शतानन्दजनकश्च यः श्रूयते रामायणे, सोऽयं न्यायसूत्रप्रणेतेति केषाञ्चन प्रवादः ।[3]

---

1 Gandharva Tanrta Quoted in Pranatoshini Tantra.

A History of Indian Logic p. 17

2 मत्स्यपुराणम् अ. 196 शब्दकल्पद्रुमः Vol. II p. 930

3 The People of Mithila, too, ascribe the foundation of the Science of Anviksiki or Logic to Gotama or Gautama and point out, as the place of his birth, a village named Gautama Stana where a fair is held every year on the 9th day of lunar month of Chitra (March-April). It is situated on the out skrits of Mithila at a distance of 28 miles north-east of

एवं महाभारते च शान्तिपर्वणि (२६५·४५) 'मेधातिथिर्महाप्राज्ञः गौतमस्तपसि स्थितः'' इत्यादिना कश्चन गौतमः प्रस्तूयते। परं एवनयोर्न कोऽपि न्यायसूत्रप्रणेतृत्वेन प्रसिद्धः पुराणादिग्रन्थेष्विति रामायणाद्युक्तः गौतमः न्यायसूत्रप्रणेतृभिन्नः कश्चन ऋषिरित्येव सध्रीचीनः पन्थाः।

गोतमस्य कालविषये सतीशचन्द्रविद्याभूषणमहाभागाः, गोतमीय-न्यायसूत्रानुवादकर्मणि प्रवृत्ताः स्वीयोपोद्घाते एवमाभाषितवन्तः।

शतपथब्राह्मणे आसुरायणेन साकं कश्चन गौतमः प्रस्तूयते। वायुपुराणे न्यायसूत्रप्रणेतृत्वेनोक्तः अक्षपादापरनामा गौतमः जातूकर्ण्यव्यासस्य समकालवर्ती कथितः। अयं च जातूकर्ण्यः मधुकाण्डे शतपथब्राह्मणीय-याज्ञवल्क्यकाण्डे च आसुरायणयास्कयोः शिष्यत्वेन निरूपितः। यास्कस्तु क्रिस्तपूर्वपञ्चमशतकेऽजीवदिति सुज्ञानां निर्णीतिः। एवं च तत्कालीन एवायं गौतमः धर्मसूत्राणामपि रचयिता तथा शौद्धोदनेर्बुद्धस्य एवं महावीर-

---

**Modern Darbhanga. There is a mud-hill of considerable height at the base of which lies the celebrated Gautama-Kunda (Gautama's well) the water where of is like milk to the taste and feeds a Perennial rivulet called on this account 'Ksirodadhi' or " Khiroli " signifying literally the sea of milk.**

**Vidyabhusbana Satischandra, History of Indian Logic, Motillal Banarsidas Publication, Varanasi, 1971 p 17 and**

**The Nyaya Sutras of Gotama, Introduction p vi The Panihi office, Bhuvaneswari Asrama, Bahdurganj, Allahabad 1913.**

छात्रस्य इन्द्रभूतेरपि समकालीन इति क्रिस्तपूर्वसार्धपञ्चमशतकात्प्राक्तन इति निर्णेतुं शक्यते ।[1]

त एव 'भारतीयतर्कशास्त्रेतिहास 'नामकग्रन्थे एवं लिखितवन्तः । इदानीन्तनन्यायसूत्रस्य प्रथमाध्याय एव गोतमप्रणीतः । द्वितीयाध्याया-दापवर्गाप्तिपर्यन्तो भागः अन्यैर्यथाप्रसङ्गं निवेशितः । यतस्तत्र वैशेषिकयोग-मीमांसा-लङ्कावतार-माध्यमिकसूत्राद्युक्तबौद्धवादविमर्शः यथावावयं दृश्यतेऽतः न्यायसूत्रमिदं प्रायः क्रिस्तीयतृतीयशतके चतुर्थशतके वा समाप्तम् इति ।[2]

---

[1] The Shatapatha Brahmana mentions Guatama along with Asurayana and the Vayupurana states that Aksapada alias Gotama or Gautama flourished during the tlme of Jatukarnya vysa. Now, Jatukarnya according to the Madhukanda and Yajnavalkyakanda of the Shatapath Brahmana was pupil of Asurayana and Yaska who are supposed to have lived about 550 B.C. .... .... Akshapada Gautama, founder of the Nyayaphilosophy, was almost a contemporary of Buddha-Gautama who founded Buddhisam and Indrabhuti Gautama who was a disciple of Mahaveera the reputed founder of Jainism.

Satishachandra The Nyaya Sutras of, Gautama, Allahabad, 1913, p. viii

[2] Perhaps the Nyayasutra, as it exists at present, is not entirely the work of one person, but has been

enlarged by interpolations from time to time. It contains referenes to the Samkhya, Vaisheshika yoga, Mimasma, Vedanta and Buddhist systems of Philosophy. There are in it passages which were quoted almost verbatim from the Lankavatara Sutra[1], Madhyamikasutra and other Buddhist works which were composed about the third or fourth century A.D. It seems that these passages were interpolated by Vatsyayana who is said to have written the first commentary called Bhashya on the Nyayasutra about 400 A.D.

Satishachandra, H. I. L. 1971 p. 46

[1] बुद्धया विवेचनात्तु भावानां याथात्म्यानुपलब्धिः ।

(न्या. सू. ४–२–२६)

बुद्धया विविच्यमानानां स्वभावो नावधार्यते ।

(लङ्कावतारसूत्रे अ. २ श्लो १०)

स्फटिकेऽपि अपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ।

(न्या. सू. ३–२–११)

अनुत्पत्तिश्च धर्माणां क्षणिकार्थं वदाम्यहम् ।

(लङ्कावतारसूत्र अ ४)

न सन् नासन् न सदसत् सतो वैधर्म्यात् ।

(न्या. सू. ४–१–४८)

न सन् नासन् न सदसन् धर्मो निर्वर्तते यदा ।



(माध्यमिकसूत्र अ. ७)

महादेवराजाराम् बोडास् महोदयास्तु तर्कसङ्ग्रहग्रन्थोपोद्घाते गोतमीयमिदं न्यायसूत्रं क्रिस्ताब्दात्प्राक् चतुर्थशतके पञ्चमे वा समाप्तिमगमदित्याहुः ।[1]

हरप्रसादशास्त्रि–याकोबि–गार्बे–लौगिप्रभृतयः द्वितीयाध्यायादितो भागः नैककर्तृक इत्यभिप्रयन्ति ।

अपि च सतीशचन्द्रमहाभागाः मैथिलो गौतमः, प्रभासस्थश्च न्यायसूत्रप्रणेता चाक्षपाद इति द्ववेतौ भिन्नावेव । अत एव "योऽक्षपादमृषिं न्याय" इति भाष्ये "यदक्षपादप्रवर" इति च वार्तिके गोतमभिन्न एवाक्षपादः न्यायसूत्रप्रणेतृत्वेन स्तूयते । अक्षपादश्च सोमशर्मणः पुत्र इति ब्रह्माण्डे श्रूयते । अयमेव न्यायसूत्रप्रणेता इत्याहुः ।[2]

---

मायागन्धर्वमृगतृष्णिकावद्वा । (न्या. सू ४–२·३२)

यथा माया यथा स्वप्नो गन्धर्वनगरं यथा ।

तथोत्पादस्तथा स्थानं तथा भङ्ग उदाहृतम् ॥

1 Sri Mahadeva Rajarama Bodas in his Introduction to the Tarksangraha holds that Gotama's work should be assigned to the end of the 5th century or the beginning of the 4th century B.C.

Misbra Umesh, History of Indian Philosophy, Tirabhukti Pnblications, Allahabad, 1·66, p 25

2 In fact Gotama or Gautama, the founder of Anvikshiki, was quite different from Akshapada. While one lived in Mithila, the other flourished at

एतत्र समञ्जसं प्रतिभाति । व्यासकर्तृके ब्रह्माण्डे अक्षपादशब्द-श्रवणमात्रेणायं न्यायसूत्रप्रणेतेति निर्णीतिः दुःशकैव । व्यासकर्तृक एव पाद्मस्कान्दादौ न्यायसूत्रप्रणेतृत्वेन गौतम एव श्रूयत इति न विस्मर्तव्यम् । यद्यप्यत्र गोतम इति गोत्र नाम स्यात् । अक्षपाद इति तस्य ज्ञानघनत्व-व्यञ्जनार्थं प्राक्तनैरिदं पदं प्रयुक्तं स्यात् । अक्षशब्दोऽत्र ज्ञानोपलक्षकः । पादशब्दोऽत्र 'उत्तमानां स्वरूपं तु पादशब्देन भण्यत' इत्युक्तदिशा स्वरूपप्रतिपादकः । ततश्च ज्ञानस्वरूप इत्युक्तो भवति । वाचस्पतिमिश्र-विरचिते न्यायसूत्रनिबन्धे विश्वनाथवृत्तौ च गौतम एव न्यायसूत्रप्रणेतेति स्पष्टोक्तिरेवं विधवादानां प्रतिबन्दी भवति । तस्माद् गोतम एवाक्षपाद इत्यङ्गीकरणं समुचितम् ।

लङ्कावतारमाध्यमिकसूत्रगतविषयविमर्शनेन वाक्यसाम्याच्चास्य न्याय-सूत्रस्य ततः प्राक्तनत्वं न, सङ्घटत इत्यप्यसाधु । अभावाद् भावोत्पत्ति-र्नानुपमृद्य प्रादुर्भावात् (४-१-१४) इत्यादिपूर्वपक्ष सूत्रोक्तयुक्तिस्तु बृहदारण्यके "नैवेह किञ्चनाग्र आसीत्" (३-२-१) "असद्वा इदमग्र आसीत्" (३-२-११) इत्यादि श्रुतौ च स्पष्टमुपलभ्यते । वेदेतिहास-

---

Prabhasa in Kathiwar. The Brahmanda Purana discribes Akshapada and Kanada as the sons of a Brahmana named Somasharma who was Shiva incarnate, and well known for his practice of austerities at the Shrine of Prabhasa during the time of Jatukarnya Vyasa.



Satishachandra, H. I. L. 1971, p. 49

पुराणादौ शून्यवाद-विज्ञानवाद-प्रधानकारणतावादाः सुप्रसिद्धाः। तथाहि —"इन्द्रो मायाभिः पुरुरूप ईयते" ऋ. vi ४७-१८ "मायाभिरुत्सिसृप्सतः" (viii १४-४) "नासदासीत् नोसदासीत्" "नैवेह किञ्चनाग्र आसीत्" अकस्माद्धिदमाविरासीत् अकस्मात्तिष्ठति अकस्म ल्लयमभ्युपैति"। "प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति" (ब्र. सू. माध्वभाष्ये २-१-१३ उदाहृतानि वचनानीमानि) इति।

अत्र शून्यविज्ञानकारणतावादानां प्रधानादिकारणतावादानां च निरूपणं दृश्यते। एत एव वैदिका वादाः उत्तरत्र शौद्धोदनिप्रभृतिभिः तत्तत्सम्प्रदायप्रवर्तकैश्च सम्यक्विवृद्धा इत्येवावोचाम। यदि चापाततो नागार्जुनादिग्रन्थप्रभावान्न्यायसूत्राणां अर्वाचीनत्वं कल्प्यते तर्हि अद्यतनसामाजिकग्रन्थजातवृत्तिविषयस्यापि तत्र सत्वात् इतोऽपि अर्वाचीनतासाधनप्रयासः क्रियेत। प्राचीनानां वैदिकानामेव विज्ञानप्रधानकारणतावादाना न्यायसूत्रे अनुवादसम्भवाच्च।

"तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः" [४-२. ४६] इति सूत्रव्याख्याने "योगशास्त्राच्चात्मात्मविधिः प्रत्येतव्य" इति भाष्यकारोक्तिमनुसृत्य योगशास्त्रकर्तुः पतञ्जलेरर्वाक्तनोऽयं न्यायविस्तर इति विदुषां केषाञ्चन वादः।

सोऽपि प्रमाणबहिर्भूत एव। व्याकरणमहाभाष्ये पातञ्जल एव— "सप्तद्वीपा वसुमती पुराणं न्यायो मीमांसा धर्मशास्त्राणि वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः" इत्युक्तत्वेन योगापेक्षया न्यायविस्तरस्य प्राचीनतासिद्धेः।

भाष्यकर्ता वात्स्यायनः

"यदक्षपादप्रतिभ" इति वार्तिककारोक्त्या[1] अयमपि महर्षितुल्य इति विज्ञायते। सर्वदर्शनसङ्ग्रहे माधवाचार्योऽपि "पक्षिलस्वामिना सेयमान्विक्षिकी विद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमाना" इति; तात्पर्यटीकायाँ च "व्याख्याते च पक्षिलस्वामिना किमपरमवशिष्यत" इति चोक्तत्वेनास्यैव पक्षिलस्वामीति नामान्तरमासीदिति ज्ञायते।

"अर्वाचीनाः केचिद्विभ्रान्ताः कौटिल्यवात्स्यायनयोर्भेदे। अन्यः कौटिल्यः चन्द्रगुप्तस्य मन्त्री अन्य एव सूत्रभाष्यकर्ता वात्स्यायनः। अत एव त्रिकाण्डकोपटीकायां "विष्णुगुप्तस्तु कौण्डिन्यः, कौटिल्यो वा चाणक्यो द्रामिल अंशुल इति पञ्चनामानि चाणक्यस्य। वात्स्यायनः मल्लिनागः पक्षिस्वामी पक्षिलमुनिर्वा इति त्रीणि वात्स्यायनमुनेरित्युक्तत्वेन सिद्ध एव तयोर्भेदः" इत्येक आहुः।

अपरे तु नन्दराज्यविनाशकः कौटिलेयार्थशास्त्रनिर्माता च यश्चाणक्यः स एव न्यायसूत्रभाष्यकर्ता वात्स्यायन इत्यभिप्रयन्ति। तेषां "वात्स्यायने मल्लिनागः कौटिल्यश्चणकात्मजः। द्रमिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः" इत्यभिधानचिन्तामणिवचनं प्रमाणम्। गम्भीरं विद्वत्तोषकं चेदं न्यायभाष्य; जिगमिषूणां शास्त्रस्य पारं अवश्याध्येयमित्यत्र न विद्वत्सु विप्रतिपत्तिलेशः।

न्यायसूत्रभाष्ये (४-२-२१, ४-२-३२, ४-१-३९-४०)

---



1. न्या. वा. p. 560 Chaukhamba Edition.

नागार्जुनकृतमाध्यमिकसूत्रोक्तप्रमेयविमर्शनेन नेदं भाष्यं ततः प्राक्तनमिति सतीशचन्द्रप्रभृतयः ।[1]

परं त्वेतत् बहवो गोपीनाथकविराजप्रभृतयो नाङ्गीकुर्वन्ति । माध्यमिकसूत्रादिबौद्धग्रन्थनामनिर्देशनस्य, ग्रन्थकर्तुर्वा नामनिर्देशनाद्यभावेन प्रागुक्तदिशौपनिषदामेव वादानां वात्स्यायनकालीनवादानां वा विमर्शसम्भवेन नास्य नागार्जुनादिपरवर्तिता निर्णेतुं शक्यते । तस्माद् वात्स्यायनः क्रिस्त-पूर्वद्विशतकीयो वा त्रिशतकीयो वा भवेदिति गोपीनाथ कविराज-उमेशमिश्र-प्रभृतयो मन्यन्ते ।[2]

**न्यायवार्तिकप्रणेता उद्योतकरः**

अयं च क्रिस्तषष्ठशतकीय इति विदुषामभिप्रायः । "यदक्षपाद-प्रतिभो भाष्यं वात्स्यायनो जगौ । अकारि महतस्तस्य भारद्वाजेन कीर्तित"मिति तदीयभाष्यवार्तिकाद्यपद्यालोचनेन भरद्वाजगोत्रोत्पन्नो वा भरद्वाजनामकस्यापत्यं वाऽयमिति ज्ञायते ।

'न्यायस्थितिमिवोद्योतकरस्वरूपां बौद्धसङ्गतिमिवालङ्कारभूषिताम्.... वासवदत्तां ददर्श" इति श्रीहर्षीयवाक्यपर्यालोचनया ततः पूर्ववर्तीति शक्यते वक्तुम् । श्रीहर्षश्च क्रिस्तीयाष्टशतकान्तभाग आसीदिति बहूनां विदुषाम् अभिप्रायः । तस्मान्नोद्योतकरः ततः प्राक्तन इति निर्णेतुं शक्यते । दिङ्नाग-नागार्जुनवसुबन्धुप्रभृतिबौद्धग्रन्थकर्तृनयं सम्यक्-खण्डयति । "उक्तानुक्तद्विरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं

---

[1] Satishachandra, H. I. L. 1971 p. 117

[2] Mishra Umesha, H. I. P. 1966 p. 34-35.

वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः '' इति पराशरपुराणोक्तं वार्तिकलक्षणमत्र विद्यत इति न प्रतिपाद्यं व्युत्पित्सूनाम् ।

वार्तिकतात्पर्यटीकाकर्ता वाचस्पतिमिश्रः शारीरकभाष्यभामतीप्रणेतुरन्यः, अनन्यो वेत्यत्रास्ति महती विप्रतिपत्तिर्विदुषाम् । वयं तु ब्रूमः—आसन्ननेके वाचस्पतिमिश्राः । तयोरेकः भामतीन्यायवार्तिकतात्पर्यटीकाब्रह्मतत्त्वसमीक्षान्यायकलिकाद्यनेकप्रबन्धप्रणेता । अत एव हि साङ्ख्यतत्त्वकौमुद्यादौ—

" मनांसि कुमुदानीव बोधयन्ती सतां मुदा ।
श्रीवाचस्पतिमिश्राणां कृतिःस्यात्तत्त्वकौमुदी । इति

" सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायां '' इत्युक्तेः न्यायवार्तिकतात्पर्यटीकायां च " विपञ्चितं चैतदस्माभिर्ब्रह्मतत्त्वसमीक्षान्यायकलिकायां '' इति तत्त्वबिन्दौ "उपपादितं न्यायकलिकायां" इति भामत्यामपि विस्तरस्तु ब्रह्मतत्त्वसमीक्षायां इति योगभाष्यव्याख्यायां ब्रह्मतत्त्वसमीक्षान्यायकलिकाभ्यामुपपादिता इति ; न्यायवार्तिकतात्पर्यटीकायां दिङ्मात्रमत्र प्रदर्शितं प्रपञ्चस्तत्त्वसमीक्षायामस्माभिः कृत इत्युपरम्यत इत्याद्युक्तेश्चोक्तनिबन्धानां प्रणेता एक एवेति निर्धार्यते । अत एवेमं षड्दर्शनटीकाकारतया व्यवहरन्ति सुधियः ।

अयं तु मण्डनमिश्र—सुचरितमिश्र—मुरारिमिश्र—पार्थसारथिमिश्रेत्यादिमिश्रशब्दान्तः मैथिल इति सन्दिह्यते ।

"न्यायसूचिनिबन्धोऽसौ अकारि सुधियां मुदे ।

श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे '' ॥

इति न्यायसूचीनिबन्धग्रन्थपरिशीलनेन अयं नवमशतके [898 A.D.] आसीदिति निश्चीयते। वार्तिकस्यैवद्योतकरस्य टीका अनेन रचिता अनेकशास्त्रपारङ्गतपण्डितैकविज्ञेया गूढार्था दर्शनग्रन्थेषु असाधारणा अपूर्वा च विद्यते। भाष्य–वार्तिक–तात्पर्याद्यध्ययन एव सूत्रगूढार्थः ज्ञातुं शक्यते, नान्यथा।

न्यायसूत्रविवरणकर्ता–गम्भीरवशंजः

इदानीं सम्पादितः 'न्यायसूत्रविवरण' नामको ग्रन्थविशेषः समग्रभारतग्रन्थालयेषु इतोऽन्यत्रानुपलभ्यमानः गम्भीरः अपूर्वश्च विद्यते। अस्य च प्रणेता गम्भीरवंशजः। तस्य देशकालादि विषये न किमपि वक्तुं प्रभवामः।

"पुण्यकरपुरश्लाघ्यो वेदशास्त्रार्थकोविदः।
गम्भीरवंशजश्चक्रे न्यायवार्तिकसङ्ग्रहम्॥"

इति स एव स्वस्मिन् विषये निजगाद। पुण्यकरपुरः इदानीन्तन पुण्यपत्तनं (Poona) भवेत्। अयं च कृती स्वात्मानं सङ्ग्रहकर्तारं ब्रूते। सङ्ग्रहश्चायमनेकधा भवति। भाष्यवार्तिकाद्युक्तप्रमेयस्य विवरणम्। बहुधा विवृतस्य ग्रन्थजातस्य मन्दबुद्धिसौकर्यार्थं सङ्क्षेपेण निरूपणम्; क्वचिदनुक्तस्यार्थविशेषस्य प्रज्ञापनं; उक्तेऽर्थे प्रमाणप्रदर्शनमित्यादि। प्रायोऽत्र ग्रन्थे भाष्यवार्तिकाद्युक्तप्रमेयसङ्ग्रहः क्वचिद्यथावाक्यं क्वचिद्यथाभिप्राय, प्रायः स्वीयमतिवैभवेन सरलगम्भीरवाक्यैर्दृढीकृतः निरूपितश्च। ग्रन्थशैलीपरिशीलनेन वार्तिकाद्युक्ताभिप्रायानुवादेन चास्य न अष्टमशतकपरवर्तितेति निश्चीयते। ग्रन्थश्चायमसाधारणो अपूर्वश्च विद्यत इत्यत्र विद्वांस एव मानम्।

अस्यौद्योतकरस्यार्वाक्तनत्वेऽयं हेतुः । सूत्रोक्तसंशयकारणपञ्चकतावादं नोररीचकार तथा संशयकारणानि त्रीण्येवेति प्रत्यपादयच्च । अत्रैवं गोतमीयं सूत्रम्—"समानानेकधर्मोपपत्तेः विप्रतिपत्तेः उपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय" इति । अस्य चाभिप्रायसङ्ग्रहः भाष्यादि व्याख्यानानुगुण्येन एवं कर्तुं शक्यते—

साधारण–असाधारण–विप्रतिपत्ति–उपलब्धि–अनुपलब्धयः पञ्चसंशयकारणानीति ।

(१) साधारणधर्माद्यथा—

स्थाणुपुरुषयोः साधारणं ऊर्ध्वतालक्षणं धर्मं पुरोवर्तिन्युपलभ्य स्थाणुपुरुषौ स्मृत्वा विशेषजिज्ञासायां स्थाणुत्वनिश्चायकं वक्रकोटरादिमत्वं पुरुषत्वनिश्चायकं शिरःपाण्यादिकं चानुपलभ्यमानस्य पुंसो उत्पद्यते डोलायमानं ज्ञानं-किमयं स्थाणुः पुरुषो वेति ।

(२) असाधारणधर्माद्यथा—

शब्दे आकाशविशेषगुणत्वमसाधारणधर्ममुपलभमानस्य निर्णायकमजानतः संशयो भवति किमयं नित्यः; अथानित्य इति ।

यद्वा भाष्योक्तदिशा "समानासमानजातीयं चानेकम् । तस्यानेकस्य धर्मोपपत्तेः विशेषस्योभयथा दृष्टत्वात् । समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते । गन्धवत्त्वात्पृथिवी अबादिभ्यो विशिष्यते गुणकर्मभ्यश्च । अस्ति च शब्दे विभागजन्यत्वं विशेषः । तस्मिन् द्रव्यं गुणः कर्म वेति सन्देहः विशेषस्योभयथा दृष्टत्वात्" । इत्यसमानधर्मात्संशयप्रकारो द्रष्टव्यः ।

(३) विप्रतिपत्तेर्यथा—

इन्द्रियेषु वैशेषिकसाङ्ख्ययोः भौतिकत्वाभौतिकत्वविप्रतिपत्तिं पश्यतो निश्चायकमजानतः पुरुषस्य सन्देहो भवति किमिन्द्रियाणि भौतिकानि ; उत अभौतिकानीति ।

अस्त्यात्मेत्येकं दर्शनं ; नास्त्यात्मेत्यपरम्, न च सद्भावासद्भावौ सहैकत्र सम्भवतः । न चान्यतरसाधको हेतुरुपलभ्यते । तत्र तत्त्वानवधारणात्संशय इति भाष्यकारीयमुपपादनमत्र ।

(४) उपलब्धिजन्यो यथा—

कूपखननानन्तरं जलोपलब्धौ सत्यां निश्चायकमजानतः संशयो भवति—किं प्राक् सदेवोदकं कूपखननेनाभिव्यक्तं अथ प्रागविद्यमानमेव इति ।

(५) अनुपलब्धिजन्यसंशयो यथा—

वटेऽस्मिन् वार्तौ पिशाचोऽस्तीति श्रुतवतः वटसमीपं गतस्य तदनुपलब्धौ सत्यां निर्णायकाभावे सति भवति संशयः ; किं विद्यमान एव पिशाचः अन्तर्धानशक्त्याऽन्तर्हितः । अथाविद्यमान एव नोपलभ्यत इति ।

तदेवं पञ्च कारणानि संशयस्येति सूत्रभाष्ययोरभिप्रायः । अत्र गम्भीरवंशजः एतत्प्रबन्धप्रणेता त्वाह—" अत्र समानधर्मोपपत्तेः अनेकधर्मोपपत्तेः विप्रतिपत्तेश्चेति त्रिविध एव संशय इति इतरपदविशेषणाद्भवति सूत्रार्थः । त्रीण्येव संशयकारणानीति वदतां अयमाशयः—

उपलब्धिर्हि सतामेव घटादीनां प्रदीपारोपणेन दृष्टा । असतां घटादीनां च कुलालव्यापारानन्तरम् । तथा चोपलब्धेः सदसत्साधारण्यात् साधारणधर्मजन्यसंशय एवायं संशयोऽप्यन्तर्भवति । अतो न पृथक् वक्तव्य इति ।

तथाऽऽनुपलब्धिः सतां ईश्वरादीनां दृष्टाऽसतां च शशविषाणादीनाम् । अनुपलब्धेरपि सदसत्साधारण्यात् साधारणधर्मजन्यसंशय एवायमपि अन्तर्भवतीति न पृथग्वक्तव्य इति ।

एतद्व्याख्यानुरोधेन चायं ग्रन्थकर्ता वार्तिकमतानुयायी क्रिस्तीयदशमशतकादर्वाक्तन इति वक्तुं शक्यते ।

ग्रन्थपणेता चायं अद्वैतमतावलम्बी शैव इति च निश्चीयते । यतो हि दुःखजन्मेत्यादि सूत्रव्याख्यानावसरे आह—"यदा आत्मादिप्रमेयतत्त्वज्ञानान्मिथ्याज्ञानमपैति मिथ्याज्ञानापाये दोषा अपयान्ति ; दोषापाये प्रवृत्तिरपैति प्रवृत्त्यपाये जन्मापैति । जन्मापाये दुःखमपैति दुःखापाये आत्यन्तिकोऽपवर्गः ; महापरमानन्दपरमशिवभावः निःश्रेयस"मिति ।

न्यायविदां मते महापरमानन्दपरमशिवभावः निःश्रेयसमिति नैवाभ्युपगम्यते । अत्राद्वैतमतवासना स्फुटतरैव प्रतिभाति ।

द्वितीयसूत्रव्याख्यानावसर एव ग्रन्थकर्तुर्वैशिष्ट्यं असाधारण्येन ज्ञातुं शक्यते । तथाहि—एतद्व्याख्यानुगुण्येन ; "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावात्" इति सूत्रपाठः । "निःश्रेयसाधिगम इति सूत्रेण गतेन सम्बन्धः" इति विवरणे दृश्यते ।

अत्र "तदनन्तरापायादपवर्ग" इति विश्वनाथपञ्चाननसम्मतः पाठः। प्रचलितपाठश्चैवमेव विद्यते। "तदनन्तराभावादपवर्ग" इति राधामोहनविद्यावाचस्पतिगोस्वामिसम्मतः पाठः।

प्रकृतग्रन्थकर्तुः पाठ एव हि साधीयान्। पूर्वसूत्रगतनिःश्रेयसाधिगमपदसम्बन्धेनैव विवक्षितप्रमेयसिद्धेः। सम्भवत्यामनुवृत्तौ पदान्तरस्वीकारे गौरवमेव। अन्यथा सूत्रस्याल्पाक्षरत्वेन तदभावे सूत्रत्वव्याघातः। उक्तं च सूत्रलक्षणं महर्षिणा पराशरेण ;—

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥" इति

एवमन्यत्रापि—

"लघूनि सूचितार्थानि स्वल्पाक्षरपदान्यपि।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥" इति।

अतोऽत्र सूत्रपाठः; सूक्ष्मेक्षिकया विमृष्टः; विद्वदनुमोद्यश्चाङ्गीकृतः। एवमेव बहुषु स्थलेषु सूत्रव्याख्यानावसरेऽयमन्यादृशीं प्रतिभातर्कपूर्णां वादसरणिं च प्रादर्शयदिति न तिरोहितं विदुषाम्।

न्यायसूत्रप्रतिपाद्यो विषयः

तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यत्र विमर्शनविचक्षणा बहवो वादिनः समानाभिप्रायाः। अविप्रतिपत्तिरत्रार्थे कणादस्य वेदान्तिनां च। अत्राह भगवान् गोतमः— "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्क

निर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्वज्ञानान्निःश्रेयसाधिगमः'' [१-१-१] इति । ततश्च मुमुक्षोरवश्यं प्रमाणादिपदार्थतत्वज्ञानं सम्पादनीयम् । तत्प्रतिपत्त्यै गोतमीयं पञ्चाध्यायात्मकं सूत्रजातं प्रवृत्तम् । अत्र प्रत्यध्यायमाह्निकद्वयम् । तत्र प्रथमाध्यायस्य प्रथमे आह्निके प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तावयवतर्कनिर्णयनिरूपणं कृतम् । द्वितीये वादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां लक्षणं निरूपितम् । द्वितीयाध्यायस्य प्रथमे आह्निके संशयस्य किं कारणं? तस्य स्वरूपं किं? इत्यादिविचारणात्मकं संशयपरीक्षणं, प्रमाणचतुष्टयाप्रामाण्यशङ्कानिराकरणं च कृतम् । द्वितीये अर्थापत्त्यादीनां पृथक् प्रामाण्यं निरस्य अनुमानेऽन्तर्भावो निरूपितः । तृतीयाध्यायस्य प्रथमे आह्निके आत्मशरीरेन्द्रियार्थपरीक्षणं कृतम् । द्वितीये बुद्धिमनसी परीक्षिते । चतुर्थस्य प्रथमे आह्निके प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः परीक्षिताः । एवं च प्रथमद्वितीयाध्यायेषु प्रमाणसम्बन्धिभूतं सर्वं विषयजातं विमृश्य ; तृतीयाध्यायेन तुरीयस्य च प्रथमेनाह्निकेनेत्याहत्याह्निकत्रयेण द्वादशविधप्रमेयजातं विचारितम् । चतुर्थस्य च द्वितीये तत्वज्ञानस्य दोषनिवर्तकत्वं ; अवयवी स्वावयवाद्भिन्न इत्येवं अवयव्यादिस्वरूपं च विमृष्टम् । साधर्म्यवैधर्म्यसमादिचतुर्विंशतिजातिनिरूपण पञ्चमस्य प्रथमे आन्हिके विहितम् । प्रतिज्ञाहानिप्रतिज्ञान्तरादिनिग्रहस्थानविमर्शः पञ्चमस्य द्वितीये कृतः । इत्येवमध्यायपञ्चकेन दशभिराह्निकैश्च अवश्यसम्पाद्यं जिज्ञासोः ; प्रमाणप्रमेयादिषोडशपदार्थतत्वज्ञानं सविस्तरं सोपस्करं निरूपितं भगवता गोतमेन ॥

हस्तप्रतिविवरणसूची

| | | |
|---|---|---|
| १) हस्तप्रतिसङ्ख्या | — | p 4071 |
| २) ग्रन्थकर्ता | — | गम्भीरवंशजः |
| ३) ग्रन्थस्वरूपम् | — | तालपत्रात्मकम् (Palm leaf) |
| ४) लिपिः | — | ग्रन्थलिपिः |
| ५) परिमाणम् | — | 38·2×3·2 |
| ६) पत्राणि | — | 1-93 |
| ७) पङ्क्तयः | — | 7 |
| ८) अक्षराणि | — | 58 |
| ९) समग्रो वाऽथासमग्रः | — | समग्रः |
| १०) स्थितिः | — | अनेकत्र त्रुटिता |

ग्रन्थलिपिनिबद्धामिमां मातृकामवलम्ब्य कर्नाटकलिपिविलिखिताऽन्यापि मातृका अत्र उपलभ्यते--

| | | |
|---|---|---|
| १) हस्तप्रतिसङ्ख्या | — | A743 |
| २) कर्ता | — | गम्भीरवंशजः |
| ३) ग्रन्थस्वरूपम् | — | पत्रात्मकम् (Paper) |
| ४) लिपिः | — | कार्नाटी |
| ५) परिमाणम् | — | 21.5×33·3 |
| ६) पत्राणि | — | 1-390 |
| ७) पङ्क्तयः | — | 12 |

८) अक्षराणि — 16-18

९) समग्र उतासमग्रः ? — समग्रः

१०) स्थितिः — उत्तमा

मूलपाठश्च यत्र (१-१-३५, २-१-४७, २-२-१२, ३-१-२८ ३१, ३-१-४४ इत्यादिस्थलेषु) लेखकप्रमादादन्यथा वा नोपलभ्यते तत्र क्वचित् अनुपलब्धो ग्रन्थः भाष्यादिसंयोजनेन वा ग्रन्थान्तरपरिशीलनेन मयैव यथाप्रज्ञं वाऽऽपूरितः ।

अन्यत्रापि यत्र मूलपाठः अशुद्ध इति मृत्पिण्डबुद्धेर्मम प्रत्यभात् तत्र ग्रन्थान्तरपरिशीलनेन शुद्धपाठनिर्णयप्रयासः कृतः । मूलग्रन्थाववोधोपयोगितयाऽऽवश्यकस्थलेषु लघ्व्यष्टिप्पण्यः प्रदत्ताः । स्खालित्यं विद्यमानं हंसक्षीरन्यायेन विद्वांसः गुणग्रहणपराः क्षाम्यंत्विति सविनयं प्रार्थये ।

## कृतज्ञतानिवेदनम्

ग्रन्थस्यास्य संशोधनकर्मणि प्रेरकाणां प्राच्यविद्यासंशोधनालयभूतपूर्वनिर्देशकानां परित्यक्तभुवां श्रीमतां डा. हेच्. पि. मल्लेदेवरुमहोदयानां साहाय्यं विशेषतः स्मरामि ।

ग्रन्थमिदमामूलाग्रतया परिशील्योपयुक्तसूचनादिकं दत्तवतां न्यायवेदान्तविदुषां उपनिर्देशकानां श्रीमतां आर्. जि. माळगि, एम.ए., महोदयानां साहाय्यं सविश्वासं स्मरामि ।

ग्रन्थस्यास्य प्रकाशने बद्धादराणां प्राचीनग्रन्थाध्ययनतत्सम्पादनादौ मार्गदर्शिनां इदानीन्तननिर्देशकानां पण्डितवराणां श्रीमतां डा. शिवगणेश-

मूर्तिमहोदयानां साहाय्यं सविश्वासं स्मरामि ।

ग्रन्थस्यास्य संशोधनादौ उपकृतवतां सर्वेषां सतां नमांसि भूयांसि ।

इति भवदीयः

विद्वज्जनविधेयः

आनन्दतीर्थ त्रि. नागसम्पिगे

सहायकसंशोधकः

प्राच्यविद्यासंशोधनालयः

मैसूरु विश्वविद्यालयः

मैसूरु

## गोतमसूत्राणामकारादिक्रमेण

# सूचीपत्रम् ।

### अ

आ

इति ।

श्री गणेशाय नमः

# अथ न्यायसूचीनिबन्धः

नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने ।
निधये वाग्विशुद्धीनामक्षपादाय तापिने ॥ १ ॥
अक्षपादप्रणीतानां सूत्राणां सारबोधिका ।
श्रीवाचस्पतिमिश्रेण मया सूची विधास्यते ॥ २ ॥

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥ दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यामभिधेयप्रयोजनसम्बन्धप्रकरणम् ॥ १ ॥

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ १ ॥ इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ २ ॥ अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च ॥ ३ ॥ प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ४ ॥ आप्तोपदेशः शब्दः ॥ ५ ॥ स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ६ ॥

इति षड्भिः सूत्रैः प्रमाणलक्षणप्रकरणम् ॥ २ ॥

आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ १ ॥ इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् ॥ २ ॥ चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ३ ॥ घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ ४ ॥ पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥ ५ ॥

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ ६ ॥ बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ ७ ॥ युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ ८ ॥ प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ॥ ९ ॥ प्रवर्तनालक्षणा दोषाः ॥ १० ॥ पुनरुत्पत्तिः प्रेत्यभावः ॥ ११ ॥ प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ १२ ॥ बाधनालक्षणं दुःखम् ॥ १३ ॥ तदत्यन्तविमोक्षोऽपवर्गः ॥ १४ ॥

इति चतुर्दशभिः सूत्रैः प्रमेयलक्षणप्रकरणम् ॥ ३ ॥

समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ १ ॥ यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २ ॥ लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ ३ ॥

इति त्रिभिः सूत्रैर्न्यायपूर्वाङ्गलक्षणप्रकरणम् ॥ ४ ॥

तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ १ ॥ स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २ ॥ सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ ३ ॥ समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥ ४ ॥ यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ५ ॥ अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ६ ॥

इति षड्भिः सूत्रैर्न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ॥ ५ ॥

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ १ ॥ साध्यनिर्देशः प्रतिज्ञा ॥ २ ॥ उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः ॥ ३ ॥ तथा वैधर्म्यात् ॥ ४ ॥ साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम् ॥ ५ ॥

तद्विपर्ययाद्वा विपरीतम् ॥ ६ ॥ उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ७ ॥ हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ ८ ॥

इत्यष्टभिः सूत्रैर्न्यायप्रकरणम् ॥ ७ ॥

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ १ ॥ विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यां न्यायोत्तराङ्गलक्षणप्रकरणम् ॥ ७ ॥

इत्येकचत्वारिंशता ४१ सूत्रैः सप्तमि प्रकरणैः ७

प्रथमाध्यायस्य प्रथमाह्निकं समाप्तम् ॥

## अथ द्वितीयमाह्निकम्

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥ यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥ स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥

इति त्रिभिः सूत्रैः कथालक्षणप्रकरणम् ॥ १ ॥

सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ॥ १ ॥ अनैकान्तिकः सव्यभिचारः ॥ २ ॥ सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ३ ॥ यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ४ ॥ साध्याविशिष्टश्च साध्यत्वात् साध्यसमः ॥ ५ ॥ कालात्ययापदिष्टः कालातीतः ॥ ६ ॥

इति षड्भिः सूत्रैः हेत्वाभासलक्षणप्रकरणम् ॥ २ ॥

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १ ॥ तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च ॥ २ ॥ अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ ३ ॥ सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ ४ ॥ धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ ५ ॥ वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ ६ ॥ न, तदर्थान्तरभावात् ॥ ७ ॥ अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥ ८ ॥

इत्यष्टभिः सूत्रैश्छललक्षणप्रकरणम् ॥ ३ ॥

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १ ॥ विप्रतिपत्तिरप्रति-

पत्तिश्च निग्रहस्थानम् ।। २ ।। तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ।। ३ ।

इति त्रिभिः सूत्रैः पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम् ।। ६ ।।

इति विंशत्या २० सूत्रैश्चतुर्भिः ४ प्रकरणैः

प्रथमाध्यायस्य द्वितीयमाह्निकं समाप्तम् ।।

समाप्तश्च प्रथमोऽध्यायः ।

अत्र प्रकरणानि ११ सूत्राणि ६१ ।।

## अथ द्वितीयोऽध्यायः

समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ।। १ ।। विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ।। २ ।। विप्रतिपत्तौ च सम्प्रतिपत्तेः ।। ३ ।। अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ।। ४ ।। तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ।। ५ ।। यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ।। ६ ।। यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ।। ७ ।।

इति सप्तभिः सूत्रैः संशयपरीक्षाप्रकरणम् ।। १ ।।

प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ।। १ ।। पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षोत्पत्तिः ।। २ ।। पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ।। ३ ।। युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् ।। ४ ।। त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ।। ५ ।। सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ।। ६ ।। तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ।। ७ ।। त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत् तत्सिद्धेः ।। ८ ।। प्रमेया च तुलाप्रामाण्यवत् ।। ९ ।। प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ।। १० ।। तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिः ।। ११ ।। न प्रदीपप्रकाशसिद्धिवत् तत्सिद्धेः ।। १२ ।। क्वचित्तु निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनैकान्तः ।। १३ ।।

इति त्रयोदशभिः सूत्रैः प्रमाणसामान्यपरीक्षाप्रकरणम् ।। २ ।।

प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ॥ १ ॥ नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ॥ २ ॥ दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ ३ ॥ ज्ञानलिङ्गत्वादात्मनो नानवरोधः ॥ ४ ॥ तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ ५ ॥ प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम् ॥ ६ ॥ सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात् ॥ ७ ॥ तैश्चापदेशो ज्ञानविशेषाणाम् ॥ ८ ॥ व्याहतत्वादहेतुः ॥ ९ ॥ नार्थविशेषप्राबल्यात् ॥ १० ॥ प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥ ११ ॥ न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ १२ ॥

इति द्वादशभिः सूत्रैः प्रत्यक्षपरीक्षाप्रकरणम् ॥ ३ ॥

साध्यत्वादवयविनि सन्देहः ॥ १ ॥ सर्वाग्रहणमवयव्यसिद्धेः ॥ २ ॥ धारणाकर्षणोपपत्तेश्च ॥ ३ ॥ सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ॥ ४ ॥

इति चतुर्भिः सूत्रैः प्रासङ्गिकमवयविपरीक्षाप्रकरणम् ॥ ४ ॥

रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ १ ॥ नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यामनुमानपरीक्षाप्रकरणम् ॥ ५ ॥

वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ १ ॥ तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात् ॥ २ ॥ नातीतानागतयोरितरेतरापेक्षा

सिद्धिः ॥ ३ ॥ वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४ ॥ कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥ ५ ॥

इति पञ्चभिः सूत्रैरौपोद्घातिकं वर्तमानपरीक्षाप्रकरणम् ॥ ६ ॥

अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥ १ ॥ प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ २ ॥ प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ३ ॥ नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः ॥ ४ ॥ तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ५ ॥

इति पञ्चभिः सूत्रैरुपमानपरीक्षाप्रकरणम् ॥ ७ ॥

शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ १ ॥ उपलब्धेरद्विप्रवृत्तित्वात् ॥ २ ॥ सम्बन्धाच्च ॥ ३ ॥ आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः ॥ ४ ॥ पूरणप्रदाहपाटनानुपपत्तेश्च सम्बन्धाभावः ॥ ५ ॥ शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ६ ॥ न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥ ७ ॥ जातिविशेषे चानियमात् ॥ ८ ॥

इत्यष्टभिः सूत्रैः शब्दसामान्यपरीक्षाप्रकरणम् ॥ ८ ॥

तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ १ ॥ न कर्तृकर्मसाधनवैगुण्यात् ॥ २ ॥ अभ्युपेत्य कालभेदे दोषवचनात् ॥ ३ ॥ अनुवादोपपत्तेश्च ॥ ४ ॥ वाक्यविभागस्य चार्थग्रहणात् ॥ ५ ॥ विध्यर्थवादानुवादवचनविनियोगात् ॥ ६ ॥ विधिर्विधायकः ॥ ७ ॥ स्तुतिनिन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ८ ॥ विधिविहितस्यानुवचन-

मनुवादः ॥ ९ ॥ नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥ १० ॥ शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ११ ॥ मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात ॥ १२ ॥

इति द्वादशभिः सूत्रैः शब्दविशेषपरीक्षाप्रकरणम् ॥ ९ ॥

इति अष्टोत्तरषष्ठ्या ६८ सूत्रैर्नवभिः ९ प्रकरणैः

द्वितीयाध्यायस्याद्यमाह्निकं समाप्तम् ॥

## अथ द्वितीयमाह्निकम्

न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ॥ १ ॥ शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥ अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ३ ॥ अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥ प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥ तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥ नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥ लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः ॥ ८ ॥ असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥ तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥ न लक्षणावस्थितापेक्षसिद्धेः ॥ ११ ॥ प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

इति द्वादशभिः सूत्रैश्चतुष्ट्वपरीक्षाप्रकरणम् ॥ १ ॥

आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥ १ ॥ न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥ २ ॥ तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः ॥ ३ ॥ सन्तानानुमानविशेषणात् ॥ ४ ॥ कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् ॥ ५ ॥ प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ ६ ॥ तदनुपलब्धेरनुपलम्भादावरणोपलम्भात् ॥ ८ ॥ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ९ ॥ अस्पर्शत्वात् ॥ १० ॥ न कर्मानित्यत्वात् ॥ ११ ॥ नाणुनित्यत्वात् ॥ १२ ॥ सम्प्रदानात् ॥ १३ ॥ तदन्तरालानुपलब्धेरहेतुः ॥ १४ ॥ अध्यापनादप्रतिषेधः ॥ १५ ॥ उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥ १६ ॥ अभ्यासात् ॥ १७ ॥ नान्यत्वेऽप्यभ्यासस्योपचारात् ॥ १८ ॥ अन्य-

दन्यस्य दनन्यत्वादनन्यदित्यन्यताऽभावः ।। १९ ।। तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ।। २० ।। विनाशकारणानुपलब्धेश्च ।। २१ ।। अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ।। २२ ।। उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ।। २३ ।। पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ।। २४ ।। विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः । २५ ।। अस्पर्शत्वादप्रतिषेधः ।। २६ ।। विभक्त्यन्तरोपपत्तेश्च समासे ।। २७ ।।

इति सप्तविंशत्या सूत्रैः शब्दानित्यत्वप्रकरणम् ।। २ ।।

विकारादेशोपदेशात् संशयः ।। १ ।। प्रकृतिविवृद्धौ विकारविवृद्धेः ।। २ ।। न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ।। ३ ।। द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः ।। ४ ।। नातुल्यप्रकृतीनां विकारविकल्पात् ।। ५ ।। द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः ।। ६ ।। न विकारधर्मानुपपत्तेः ।। ७ ।। विकारप्राप्तानामपुनरापत्तेः ।। ८ । सुवर्णादीनां पुनरापत्तेरहेतुः ।। ९ ।। न तद्विकाराणां सुवर्णभावाव्यतिरेकात् ।। १० ।। नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ।। ११ ।। नित्यानामतीन्द्रियत्वात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ।। १२ ।। अनवस्थायित्वे च वर्णोपलब्धिवत् तद्विकारोपपत्तिः ।। १३ ।। विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ।। १४ ।। प्रकृत्यनियमात् ।। १५ ।। अनियमे नियमान्नानियमः ।। १६ ।। नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ।। १७ ।। गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकारः ।। १८ ।।

इति अष्टादशभिः सूत्रैः शब्दपरिणामप्रकरणम् ।। ३ ।।

ते विभक्त्यन्ताः पदम् ॥ १ ॥ व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः ॥ २ ॥ याशब्दसमूहत्यागपरिग्रहसङ्ख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः ॥ ३ ॥ न तदनवस्थानात् ॥ ४ ॥ सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ५ ॥ आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥ ६ ॥ व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ॥ ७ ॥ नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ८ ॥ व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ९ ॥ व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ १० ॥ आकृतिर्जातिलिङ्गाख्या ॥ ११ ॥ समानप्रसवात्मिका जातिः ॥ १२ ॥

इति द्वादशभिः सूत्रैः शब्दशक्तिपरीक्षा[पदार्थनिरूपण]प्रकरणम् ॥ ४ ॥

इति नवोत्तरषष्ठ्या ६९ सूत्रैश्चतुर्भिः ४ प्रकरणैः

द्वितीयाध्यायस्य द्वितीयमाह्निकं समाप्तम् ॥

समाप्तश्च द्वितीयोऽध्यायः ।

अत्र प्रकरणानि १३ सूत्राणि १३७ ॥

## अथ तृतीयोऽध्यायः

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥ विषयव्यवस्थानात् ॥ २ ॥ तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥

इति त्रिभिः सूत्रैरिन्द्रियव्यतिरिक्तात्मप्रकरणम् ॥ १ ॥

शरीरदाहे पातकाभावात् ॥ १ ॥ तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ २ ॥ न कार्याश्रयकर्तृवधात् ॥ ३ ॥

इति त्रिभिः सूत्रैः शरीरव्यतिरिक्तात्मप्रकरणम् ॥ २ ॥

सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ १ ॥ नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ २ ॥ एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ३ ॥ अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ ४ ॥ दृष्टान्तविरोधादप्रतिषेधः ॥ ५ ॥ इन्द्रियान्तरविकारात् ॥ ६ ॥ न स्मृतेः स्मर्तव्यविषयत्वात् ॥ ७ ॥ तदात्मगुणसद्भावादप्रतिषेधः ॥ ८ ॥

इत्यष्टभिः सूत्रैः प्रासङ्गिकं चक्षुरद्वैतप्रकरणम् ॥ ३ ॥

नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥ १ ॥ ज्ञातुर्ज्ञानसाधनोपपत्तेः सञ्ज्ञाभेदमात्रम् ॥ २ ॥ नियमश्च निरनुमानः ॥ ३ ॥

इति त्रिभिः सूत्रैर्मनोव्यतिरेकप्रकरणम् ॥ ४ ॥

पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः ॥ १ ॥ पद्मादिषु प्रबोधसम्मीलनविकारवत् तद्विकारः ॥ २ ॥ नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ ३ ॥ प्रेत्याहाराभ्यास कृतात्

स्तन्याभिलाषात् ॥ ४ ॥ अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम् ॥ ५ ॥ नान्यत्र प्रवृत्त्यभावात् ॥ ६ ॥ वीतरागजन्मादर्शनात् ॥ ७ ॥ सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः ॥ ८ ॥ न सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ ९ ॥

इति नवभिः सूत्रैर्नित्यताप्रकरणम् ॥ ५ ॥

पार्थिवं गुणान्तरोपलब्धेः ॥ १ ॥ पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ॥ २ ॥ निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ॥ ३ ॥ गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥ ४ ॥ श्रुतिप्रामाण्याच्च ॥ ५ ॥

इति पञ्चभिः सूत्रैः शरीरपरीक्षाप्रकरणम् ॥ ६ ॥

कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः ॥ १ ॥ महदणुग्रहणात ॥ २ ॥ रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम् ॥ ३ ॥ तदनुपलब्धेरहेतुः ॥ ४ ॥ नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ५ ॥ द्रव्यगुणधर्मभेदाच्च डपलब्धिनियमः ॥ ६ ॥ अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ॥ ७ ॥ कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ८ ॥ मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ९ ॥ न रात्रावप्यनुपलब्धेः ॥ १० ॥ बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ११ ॥ अभिव्यक्तौ चाभिभवात् ॥ १२ ॥ नक्तञ्चरनयनरश्मिदर्शनाच्च ॥ १३ ॥ अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ १४ ॥ कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ १५ ॥ अप्रतिघातात् सन्निकर्षोपपत्तिः ॥ १६ ॥ आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽभिघातात् ॥ १७ ॥ नेतरेतरधर्मप्रसङ्गात् ॥ १८ ॥

आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः ॥ १९ ॥ दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः ॥ २० ॥

इति विंशत्या सूत्रैरिन्द्रिय[भौतिकत्व] परीक्षाप्रकरणम् ॥ ७ ॥

स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ १ ॥ त्वग व्यतिरकात् ॥ २ ॥ न युगपदर्थानुपलब्धेः ॥ ३ ॥ विप्रतिषेधाच्च न त्वगेका ॥ ४ ॥ इन्द्रियार्थपञ्चत्वात् ॥ ५ ॥ न तदर्थबहुत्वात् ॥ ६ ॥ गन्धत्वाद्यव्यतिरेकात् गन्धादीनामप्रतिषेधः ॥ ७ ॥ विषयत्वाव्यतिरेका-देकत्वम् ॥ ८ ॥ न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥ ९ ॥ भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ १० ॥

इति दशभिः सूत्रैरिन्द्रियनानात्वप्रकरणम् ॥ ८ ॥

गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः ॥ १ ॥ अप्ते-जोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः ॥ २ ॥ न सर्वगुणानुपलब्धेः ॥ ३ ॥ एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तराणां तदनुपलब्धिः ॥ ४ ॥ विष्टं ह्यपरं परेण ॥ ५ ॥ न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६ ॥ पूर्व-पूर्वगुणोत्कर्षात् तत्तत्प्रधानम् ॥ ७ ॥ तद्व्यवस्थानं तु भूयस्त्वात् ॥ ८ ॥ सगुणानामिन्द्रियभावात् ॥ ९ ॥ तेनैव तस्याग्रहणाच्च ॥ १० ॥ न शब्दगुणवैधर्म्यात् ॥ ११ ॥

इति द्वादशभिः सूत्रैरर्थपरीक्षाप्रकरणम् ॥ ९ ॥

इति त्रिसप्तत्या ७३ सूत्रैर्नवभिः ९ प्रकरणैः

तृतीयाध्यायस्याद्यमाह्निकं समाप्तम् ॥

## अथ द्वितीयमाह्निकम्

कर्माकाशसाधर्म्यात् संशयः ॥ १ ॥ विषयप्रत्यभिज्ञानात् ॥ २ ॥ साध्यसमत्वादहेतुः ॥ ३ ॥ न युगपद्ग्रहणात् ॥ ४ ॥ अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ५ ॥ क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥ अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥ न गत्यभावात् ॥ ८ ॥ स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः ॥ ९ ॥

इति नवभि. सूत्रैर्बुद्ध्यनित्यताप्रकरणम् ॥ १ ॥

स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ १ ॥ नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा ॥ २ ॥ नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३ ॥ क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुत्पत्तिः ॥ ४ ॥ लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ ५ ॥ न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ ६ ॥ व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ ७ ॥ क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ ८ ॥

इत्यष्टभिः सूत्रैरौपोद्घातिकं क्षणभङ्गप्रकरणम् ॥ २ ॥

नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १ ॥ युगपज्ज्ञेयानुपलब्धेर्न मनसः ॥ २ ॥ तदात्मगुणत्वेऽपि तुल्यम् ॥ ३ ॥ इन्द्रियैर्मनसः सन्निकर्षाभावात् तदनुत्पत्तिः ॥ ४ ॥ नोत्पत्तिकारणानपदेशात् ॥ ५ ॥ विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ ५ ॥ अनित्यत्वग्रहणात् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ ७ ॥ ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ ८ ॥ नान्तःशरीरवृत्तित्वान्मनसः ॥ ९ ॥ साध्यत्वादहेतुः ॥ १० ॥ स्मरतः

शरीरधारणोपपत्तेरप्रतिषेधः ॥ ११ ॥ न तदाशुगतित्वादात्ममनसः ॥ १२ ॥ न स्मरणकालानियमात् ॥ १३ ॥ आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥ १४ ॥ व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ १५ ॥ प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपत्स्मरणम् ॥ १६ ॥ ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ १७ ॥ तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ १८ ॥ परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ १९ ॥ नियमानियमौ तु तद्विशेषकौ ॥ २० ॥ यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ २१ ॥ परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ २२ ॥ स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥ २३ ॥ प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ २४ ॥

इति चतुर्विंशत्या सूत्रैर्बुद्धेरात्मगुणत्वप्रकरणम् ॥ २ ॥

कर्मानवस्थायिग्रहणात् ॥ १ ॥ अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् ॥ २ ॥ हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ३ ॥ न प्रदीपार्चिषः सन्तत्यभिव्यक्तग्रहणवत् तद्ग्रहणम् ॥ ४ ॥

इति चतुर्भिः सूत्रैर्बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥ ३ ॥

द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ १ ॥ यावच्छरीरभावित्वाद्रूपादीनाम् ॥ २ ॥ न पाकजगुणान्तरोत्पत्तेः ॥ ३ ॥ प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ४ ॥ शरीरव्यापित्वात् ॥ ५ ॥ न केशनखादिष्वनुपलब्धेः ॥ ६ ॥ त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादि-

स्यप्रसङ्गः ॥ ७ ॥ शरीरगुणवैधर्म्यात् ॥ ८ ॥ न रूपादीनामितरेतर-
वैधर्म्यात ॥ ९ ॥ ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ १० ॥

इति दशभि सूत्रैर्बुद्धेः शरीरगुणव्यतिरेकप्रकरणम् ॥ ५ ॥

ज्ञानायौगपद्यादेकं मनः ॥ १ ॥ न युगपदनेकक्रियोपलब्धेः
॥ २ ॥ अलातचक्रदर्शनवत तदुपलब्धिराशुसञ्चारात ॥ ३ ॥ यथोक्त-
हेतुत्वाच्चाणु ॥ ४ ॥

इति चतुर्भिः सूत्रैर्मनःपरीक्षाप्रकरणम् ॥ ६ ॥

पूर्वकृतफलानुबन्धात तदुत्पत्तिः ॥ १ ॥ भूतेभ्यो मूर्त्युपादानवत्
तदुपादानम् ॥ २ ॥ न साध्यसमत्वात् ॥ ३ ॥ नोत्पत्तिनिमित्तत्वा-
न्मातापित्रोः ॥ ४ ॥ तथाहारस्य ॥ ५ ॥ प्राप्तौ चानियमात ॥ ६ ॥
शरीरोत्पत्तिनिमित्तवत संयोगोत्पत्तिनिमित्तं कर्म ॥ ७ ॥ एतेनानियमः
प्रत्युक्तः ॥ ८ ॥ तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे ॥ ९ ॥
मनःकर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः ॥ १० ॥ नित्यत्वप्रसङ्गश्च
प्रायणानुपपत्तेः ॥ ११ ॥ अणुश्यामतानित्यत्ववदेतत् स्यात् ॥ १२ ॥
नाकृताभ्यागमप्रसङ्गात् ॥ १३ ॥

इति त्रयोदशभिः सूत्रैः प्रासङ्गिकमदृष्टनिष्पाद्यत्वप्रकरणम् ॥ ७ ॥

इति द्विसप्तत्या ७२ सूत्रैः सप्तभिः ७ प्रकरणैः

तृतीयाध्यायस्य द्वितीयमाह्निकं समाप्तम ॥

समाप्तश्च तृतीयोऽध्यायः ।

अत्र प्रकरणानि १६ सूत्राणि १४२ ॥

## अथ चतुर्थोऽध्यायः

प्रवृत्तिर्यथोक्ता ॥ १ ॥ तथा दोषाः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यां प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥ १ ॥

तत्त्रैराश्यं रागद्वेषमोहान्तरभावात् ॥ १ ॥ नैकप्रत्यनीकत्वात् ॥ २ ॥ व्यभिचारादहेतुः ॥ ३ ॥ तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः ॥ ४ ॥ निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥ ५ ॥ दोषलक्षणावरोधान्मोहस्य ॥ ६ ॥ निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ७ ॥

इति सप्तभिः सूत्रैर्दोषत्रैराश्यप्रकरणम् ॥ २ ॥

आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १ ॥ व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ २ ॥ न घटाद् घटानिष्पत्तेः ॥ ३ ॥ व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ॥ ४ ॥

इति चतुर्भिः सूत्रैः प्रेत्यभावपरीक्षाप्रकरणम् ॥ ३ ॥

अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १ ॥ व्याघातादप्रयोगः ॥ २ ॥ नातीतानागतयोः कारकशब्दप्रयोगात् ॥ ३ ॥ विनष्टेभ्योऽनिष्पत्तेः ॥ ४ ॥ क्रमनिर्देशादप्रतिषेधः ॥ ५ ॥

इति पञ्चभिः सूत्रैः शून्यतोपादानप्रकरणम् ॥ ४ ॥

ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ।। १ ।। न पुरुषकर्माभावे फलानिष्पत्तेः ।। २ ।। तत्कारितत्वादहेतुः ।। ३ ।।

इति त्रिभिः सूत्रैरीश्वरोपादानप्रकरणम् ।। ५ ।।

अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ।। १ ।। अनिमित्तनिमित्तत्वान्नानिमित्ततः ।। २ ।। निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ।। ३ ।।

इति त्रिभिः सूत्रैराकस्मिकत्वप्रकरणम् ।। ६ ।।

सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ।। १ ।। नानित्यत्वात् ।। २ ।। तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ।। ३ ।। नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ।। ४ ।।

इति चतुर्भिः सूत्रैः सर्वानित्यत्वनिराकरणम् ।। ७ ।।

सर्वं नित्यं पञ्चभूतनित्यत्वात् ।। १ ।। नोत्पत्तिविनाशकारणोपलब्धेः ।। २ ।। तल्लक्षणावरोधादप्रतिषेधः ।। ३ ।। नोत्पत्तितत्कारणोपलब्धेः ।। ४ ।। न व्यवस्थानुपपत्तेः ।। ५ ।।

इति पञ्चभिः सूत्रैः सर्वनित्यनिराकरणप्रकरणम् ।। ८ ।।

सर्वं पृथग् भावलक्षणपृथक्त्वात् ।। १ ।। नानेकलक्षणैरेकभावनिष्पत्तेः ।। २ ।। लक्षणव्यवस्थानादेवाप्रतिषेधः ।। ३ ।।

इति त्रिभिः सूत्रैः सर्वपृथक्त्वनिराकरणम् ।। ९ ।।

सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ १ ॥ न स्वभावसिद्धे-र्भावानाम् ॥ २ ॥ न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३ ॥ व्याहतत्वा-दयुक्तम् ॥ ४ ॥

इति चतुर्भिः सूत्रैः सर्वशून्यतानिराकरणप्रकरणम् ॥ १० ॥

सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ १ ॥ न कारणावयवभावात् ॥ २ ॥ निरवयवत्वादहेतुः ॥ ३ ॥

इति त्रिभिः सूत्रैः संख्यैकान्तवादप्रकरणम् ॥ ११ ॥

सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ १ ॥ कालान्तरेणा-निष्पत्तिर्हेतुविनाशात् ॥ २ ॥ प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात् ॥ ३ ॥ नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् ॥ ४ ॥ उत्पादव्ययदर्शनात् ॥ ५ ॥ बुद्धिसिद्धं तु तदसत् ॥ ६ ॥ आश्रयव्यतिरेकाद्वृक्षफलो-त्पत्तिवदित्यहेतुः ॥ ७ ॥ प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ८ ॥ न पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ९ ॥ तत्सम्बन्धात् फल-निष्पत्तेस्तेषु फलवदुपचारः ॥ १० ॥

इति दशभिः फलपरीक्षाप्रकरणम् ॥ १२ ॥

विविधबाधनायोगात् दुःखमेव जन्मोत्पत्तिः ॥ १ ॥ न सुखस्या-प्यन्तरालनिष्पत्तेः ॥ २ ॥ बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ३ ॥ पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ४ ॥ सुषुप्तस्य स्वप्ना-दर्शने क्लेशाभावादपवर्गः ॥ ५ ॥ न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६ ॥ न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ७ ॥ प्रागुत्पत्तेरभावा-

नित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम् ॥ ८ ॥ अणुश्यामतानित्यत्ववद्वा ॥ ९ ॥ न संकल्पनिमित्तत्वाच्च रागादीनाम् ॥ १० ॥

इति दशभिः सूत्रैरपवर्गपरीक्षाप्रकरणम् ॥ १४ ॥

इति सप्तषष्ठ्या ६७ सूत्रैः चतुर्दशभिः १४ प्रकरणैः

चतुर्थाध्यायस्याद्यमाह्निकम् ॥

## अथ द्वितीयमाह्निकम्

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥ दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः ॥ २ ॥ तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥

इति त्रिभिः सूत्रैस्तत्त्वज्ञानोत्पत्तिप्रकरणम् ॥ १ ॥

विद्याविद्याद्वैविध्यात् संशयः ॥ १ ॥ तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ २ ॥ वृत्त्यनुपपत्तेरपि तर्हि न संशयः ॥ ३ ॥ कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ॥ ४ ॥ तेषु चावृत्तेरवयव्यभावः ॥ ५ ॥ पृथक् चावयवेभ्योऽवृत्तेः ॥ ६ ॥ न चावयव्यवयवाः ॥ ७ ॥ एकस्मिन् भेदाभावादभेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ८ ॥ अवयवान्तराभावेऽप्यवृत्तेरहेतुः ॥ ९ ॥ केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः ॥ १० ॥ स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ ११ ॥ अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ॥ १२ ॥ न प्रलयोऽणुसद्भावात् ॥ १३ ॥ परं वा त्रुटेः ॥ १४ ॥

इति चतुर्दशभिः सूत्रैः प्रासङ्गिकमवयवावयविप्रकरणम् ॥ २ ॥

आकाशव्यतिभेदात् तदनुपपत्तिः ॥ १ ॥ आकाशासर्वगतत्वं वा ॥ २ ॥ अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥ ३ ॥ शब्दसंयोगविभवाच्च सर्वगतम् ॥ ४ ॥ अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ ५ ॥ मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ ६ ॥ संयोगोपपत्तेश्च ॥ ७ ॥ अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ ८ ॥

इत्यष्टभिः सूत्रैरौपोद्घातिकं निरवयवप्रकरणम् ॥ ३ ॥

बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ॥ १ ॥ व्याहतत्वादहेतुः ॥ २ ॥ तदाश्रयत्वादपृथग्ग्रहणम् ॥ ३ ॥ प्रमाणतश्चार्थप्रतिपत्तेः ॥ ४ ॥ प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ५ ॥ स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ ६ ॥ मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥ ७ ॥ हेत्वभावादसिद्धिः ॥ ८ ॥ स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः ॥ ९ ॥ मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥ १० ॥ बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ११ ॥ तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ १२ ॥

इति द्वादशभिः सूत्रैः प्रासङ्गिकं बाह्यार्थभङ्गनिराकरणप्रकरणम् ॥ ४ ॥

समाधिविशेषाभ्यासात् ॥ १ ॥ नार्थविशेषप्राबल्यात् ॥ २ ॥ क्षुदादिभिः प्रवर्तनाच्च ॥ ३ ॥ पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥ ४ ॥ अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ५ ॥ अपवर्गेप्येवं प्रसङ्गः ॥ ६ ॥ न निष्पन्नावश्यम्भावित्वात् ॥ ७ ॥ तदभावश्चापवर्गे ॥ ८ ॥ तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ९ ॥ ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ १० ॥ तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात् ॥ ११ ॥ प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ १२ ॥

इति द्वादशभिः सूत्रैस्तत्त्वज्ञानविवृद्धिप्रकरणम् ॥ ५ ॥

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ १ ॥ ताभ्यां विगृह्य कथनम् ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यां तत्त्वज्ञानपरिपालनप्रकरणम् ॥ ६ ॥

इति एकपञ्चाशता ५१ सूत्रैः षड्भिः ६ प्रकरणैः

चतुर्थाध्यायस्य द्वितीयमाह्निकं समाप्तम् ॥

समाप्तश्चायं चतुर्थोऽध्यायः ।

अत्र प्रकरणानि २० सूत्राणि ११८ ॥

## अथ पञ्चमोऽध्यायः

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥ १ ॥ साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥ गोत्वादेर्गोसिद्धिवत् तत्सिद्धिः ॥ ३ ॥

इति त्रिभिः सूत्रैः सत्प्रतिपक्षदेशनाभासप्रकरणम् ॥ १ ॥

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥ १ ॥ किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ २ ॥ साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ३ ॥

इति त्रिभिः सूत्रैः साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिजातिषट्कप्रकरणम् ॥ २ ॥

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ १ ॥ घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यां प्राप्त्यप्राप्तियुगनद्धवाहिविकल्पोपक्रमजातिद्वयप्रकरणम् ॥ ३ ॥

दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ १ ॥ प्रदीपोपादानप्रसङ्गविनिवृत्तिवत् तद्विनिवृत्तिः ॥ २ ॥ प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ३ ॥

इति त्रिभिः सूत्रैर्युगनद्धवाहिप्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम् ॥ ४ ॥

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १ ॥ तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यामनुत्पत्तिसमप्रकरणम् ॥ ५ ॥

सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः ॥ १ ॥ साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यां संशयसमप्रकरणम् ॥ ६ ॥

उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १ ॥ प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ २ ॥



इति द्वाभ्यां सूत्राभ्यां प्रकरणसमप्रकरणम् ॥ ७ ॥

त्रैकाल्यानुपपत्तेर्हेतोरहेतुसमः ॥ १ ॥ न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ २ ॥ प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥ ३ ॥

इति त्रिभिः सूत्रैर्हेतुसमप्रकरणम् ॥ ८ ॥

अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ १ ॥ अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यामर्थापत्तिसमप्रकरणम् ॥ ९ ॥

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ॥ १ ॥ क्वचित् तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यामविशेषसमप्रकरणम् ॥ १० ॥

उभयकारणोपपत्तेरुपपत्तिसमः ॥ १ ॥ उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यामुपपत्तिसमप्रकरणम् ॥ ११ ॥

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥ १ ॥ कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यामुपलब्धिसमप्रकरणम् ॥ १२ ॥

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ १ ॥ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २ ॥ ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥ ३ ॥

इति त्रिभिः सूत्रैरनुपलब्धिसमप्रकरणम् ॥ १३ ॥

साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ १ ॥ साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्याच्च ॥ २ ॥ दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः ॥ ३ ॥

इति त्रिभिः सूत्रैरनित्यसमप्रकरणम् ॥ १४ ॥

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ १ ॥ प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यां नित्यसमप्रकरणम् ॥ १६ ॥

प्रयत्नकार्यानेकत्वात् कार्यसमः ॥ १ ॥ कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यां कार्यसमप्रकरणम् ॥ १६ ॥

प्रतिषेधेऽपि समानो दोषः ॥ १ ॥ सर्वत्रैवम् ॥ २ ॥ प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ३ ॥ प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४ ॥ स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः ॥ ५ ॥

इति पञ्चभिः सूत्रैः षट्पक्षीरूपकथाभासप्रकरणम् ॥ १७ ॥

इति त्रिचत्वारिंशता ४३ सूत्रैः सप्तदशभिः १७ प्रकरणैः

पञ्चमस्याद्यमाह्निकं समाप्तम् ॥

## अथ द्वितीयमाह्निकम्

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥ प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥ प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥ प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥ पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः ॥ ५ ॥ अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥

इति षड्भिः सूत्रैः प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम् ॥ १ ॥

प्रकृतादर्थादप्रतिसम्बन्धार्थमर्थान्तरम् ॥ १ ॥ वर्णक्रमनिर्देशवन्निरर्थकम् ॥ २ ॥ परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ३ ॥ पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ ४ ॥

इति चतुर्भिः सूत्रैः प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम् ॥ २ ॥

अवयवविपर्यासवचनमप्राप्तकालम् ॥ १ ॥ हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ २ ॥ हेतूदाहरणाधिकमधिकम् ॥ ३ ॥

इति त्रिभिः सूत्रैः स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम् ॥ ३ ॥

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १ ॥ अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यां पुनरुक्तनिग्रहस्थानप्रकरणम् ॥ ४ ॥

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १ ॥ अविज्ञातं चाज्ञानम् ॥ २ ॥ उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ ३ ॥ कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ ४ ॥

इति चतुर्भिः सूत्रैरुत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् ॥ ५ ॥

स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ १ ॥ निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥ २ ॥ अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ ३ ॥

इति त्रिभिः सूत्रैर्दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् ॥ ६ ॥

सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ १ ॥ हेत्वाभासाश्च यथोक्ताः ॥ २ ॥

इति द्वाभ्यां सूत्राभ्यां कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ॥ ७ ॥

इति चतुर्विंशत्या २४ सूत्रैः सप्तभिः ७ प्रकरणैः

पञ्चमाध्यायस्य द्वितीयमाह्निकम् समाप्तम् ।

समाप्तश्च पञ्चमोऽध्यायः ॥

अत्र प्रकरणानि २४ सूत्राणि ६७ ॥

अस्मिन् न्यायशास्त्रेऽध्यायाः ५ आह्निकानि १० प्रकरणा[redacted]नि ८४ सूत्राणि ५२८ पदानि १९६ अक्षराणि ८३८५ ॥

यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
श्रीगोतमसुगवीनामतिजरतीनां समुद्धरणात् ॥ १ ॥

संसारजलधिसेतौ वृषकेतौ सकलदुःखशमहेतौ ।
एतस्य फलमखिलमर्पितमेतेन प्रीयतामीशः ॥ २ ॥

न्यायसूचीनिबन्धोसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥ ३ ॥

इति श्रीन्यायाचार्यसन्मिश्रश्रीवाचस्पतिविरचितो न्यायसूचीनिबन्[redacted]धः समाप्तः । शुभमस्तु ॥

### न्यायसूत्रविवरणस्य ग्रन्थानुसारि

# विषयसूचीपत्रम्

| विषयः | पृ. | पं. |
|---|---|---|
| जातिलक्षणाभिधानम् | ५४ | ११ |
| निग्रहस्थाननिरूपणम् | ५५ | २ |
| संशयपरीक्षाप्रकरणम् | ५६ | २ |
| प्रमाणसामान्यपरीक्षा | ६० | ३ |
| प्रत्यक्षादीनामप्रामाण्यशङ्का | ६० | ४ |
| प्रमाणपरीक्षायामाक्षेपनिरासः | ६३ | १ |
| प्रमाणप्रमेयव्यवहारस्य पारमार्थिकत्वसमर्थनम् | ६५ | ७ |
| प्रत्यक्षलक्षणाक्षेपः | ७० | १ |
| पार्श्वस्थशङ्कोत्थापनम् | ७१ | ८ |
| प्रत्यक्षलक्षणाक्षेपपरिहारः | ७१ | ८ |
| प्रत्यक्षस्यानुमानान्तर्भावशङ्का | ७५ | ७ |
| प्रत्यक्षस्यानुमायाः पार्थक्यसमर्थनम् | ७७ | १ |
| अवयविपरीक्षाप्रकरणम् | ७८ | ५ |
| अनुमानपरीक्षा | ८० | ९ |
| वर्तमानकालपरीक्षाप्रकरणम् | ८२ | ३ |
| उपमानस्वरूपविमर्शः | ८५ | ७ |
| शब्दपरीक्षाप्रकरणम् | ८६ | ४ |
| शब्दविशेषप्रामाण्यचिन्ता | ९० | ५ |
| प्रमाणचतुष्ट्वपरीक्षाप्रकरणम् | ९६ | २ |
| शब्दनित्यत्वप्रकरणम् | १०१ | १४ |
| यथाश्रुतौ हेतूनां व्यभिचारशङ्का | १०२ | १० |

ॐ

# गम्भीरवंशजविरचितं
# न्यायसूत्रविवरणम्

[मङ्गलाचरणम्]

विश्वव्यापी विश्वशक्तिः पिनाकी
विश्वेशानो विश्वकृद्विश्वमूर्तिः ।
विश्वज्ञाता विश्वसंहारकारी
विश्वाराध्यो राधयत्वीप्सितं नः ॥

यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद ।
कुतार्किकाज्ञाननिरासहेतुः [1]करिष्यते तस्य मया प्रबन्धः ॥

पुण्यकरपुरश्लाघ्यो वेदशास्त्रार्थकोविदः ।
गम्भीरवंशजश्चक्रे [2]न्यायवार्तिकसंग्रहम् ॥

---

अनन्तगुणपूर्णाय निर्दोषाय परात्मने ।
आनन्दतीर्थगुरवे नमः कारुण्यसिन्धवे ॥

[1] × × × × तस्य । मा

[2] ग्रन्थकर्ता चायं प्रायः पुण्यपत्तनस्थः न्यायवार्तिकसंग्रहमकरोत् । सङ्ग्रहश्चायमनेकधा-भाष्यवार्तिकाद्युक्तप्रमेयस्य विवरणम्, बहुधा विवृतस्य ग्रन्थजातस्य मन्दबुद्धिग्रहणसौकर्यार्थं सङ्क्षेपेण सङ्ग्रहणम्, क्वचिदनुक्त-स्यार्थविशेषस्य प्रज्ञापनं, उक्तेऽर्थे प्रमाणादिप्रदर्शनमिति । प्रायोऽत्र ग्रन्थे भाष्यवार्तिकाद्युक्तप्रमेयसङ्ग्रहः क्वचिद्यथावाक्यं क्वचिद्यथाभिप्रायं स्वीय-वाक्यैश्च निरूपितः ।

[निःश्रेयसाधिगमसाधननिरूपणम्]

प्रमाणादिपदार्थतत्वज्ञानान्निःश्रेयसाधिगम इत्याद्यसूत्रतात्पर्यम् । [1]अत्र किल चतसृषु [2]प्रमातृप्रमाणप्रमेयप्रमितिविधासु तत्त्वं परिसमाप्यते ।

[3]किं पुनस्तत्त्वं? सतश्च सद्भावः, असतश्च असद्भावः । तत्र तावत् षोडशधा व्यूढमुपदेष्टुं प्रक्रमते, तद्यथा—

**प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥**

[4]प्रमाणेति कृतमङ्गलः ।

---

[1] अत्र=प्रमात्रादि चतुर्वर्गे इत्यर्थः ।

[2] प्रमावान् प्रमाता । यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमातेति वा । प्रमाकरणं प्रमाणं । योऽर्थः प्रमीयते तत्प्रमेयम् । यदर्थविज्ञानं सा प्रमितिः ।

[3] तत्त्वं परिसमाप्यत इत्युक्तं, किं तत्परिसमाप्यमानं तत्त्वमित्यत आह—किं पुनरिति ! तत्=सदसती । तस्य भावः प्रमाणविषयत्वं तत्त्वमित्यर्थः । विधायकप्रमाणविषयत्वं 'सद्भावः' । 'असद्भावः' निषेधकप्रमाणविषयत्वम् ।

[4] ननु मङ्गलाचरणपुरस्सराणि खलु कर्माणि निरन्तरायं परिसमाप्यन्ते प्रतीयन्ते च । न चाकृतमङ्गलाचरणानामपि तदभावोपलम्भात् ; न तत्र

कार्यकारणभावोऽस्तीति वाच्यम् । तथा सति कारीर्यादेरपि वृष्ट्याद्यहेतुत्वापत्तेः ।

स्यादेतदेवं, यदि कारीर्यादेर्वृष्ट्यादिहेतुत्वं निष्प्रमाणकं स्यात्; न चैवम्, साध्यसाधनभावस्य श्रुतिनिश्चितत्वेन तदभावेपि तदभावस्यानेककारणकत्वकल्पनात् । दर्शपूर्णमासाभ्यामिव त्रैवर्णिकपरिचर्यादिनापि स्वर्गप्राप्तेः । कारणभावेप्यभावस्तु कर्तृकारणादिवैगुण्यनिमित्तो भवति । न हि सामग्रीवैकल्येन साध्यं व्यभिचरन्हेतुरहेतुः स्यात् । कर्त्रादिसाद्गुण्ये वा प्रबलप्रतिबन्धकसद्भावः कल्प्यते । न हि प्रतिबद्धं कार्यमजनयत् कारणमकारणं भवति । वह्नेरपि स्फोटं प्रत्यकारणत्वप्रसङ्गात । न चैवं सामग्री वैगुण्यशङ्कया प्रतिबन्धकशङ्कया वास्याननुष्ठानम् । प्राणिभृतां प्रवृत्तिसामान्यस्यौत्सर्गिकत्वात् । अन्यथैवंविधशङ्कायाः सर्वत्र सौलभ्येन सकलप्रवृत्तिविलयापातादिति ।

सममेतत् सकलं प्रकृतेऽपि । इत्थं चाविगीतशिष्टाचारपरम्पराप्राप्तं मङ्गलं शिष्यशिक्षार्थं कार्यं निबन्धनीयं चासन्निहितशिष्यज्ञापनार्थम् । न च मुनिर्गोतमः प्रकृतेऽकृतमङ्गल इति कथं मङ्गलस्य कार्यकारणभावाध्यवसाय इति वाच्यम् । परमात्मपरप्रमाणपदप्रयोगेन मङ्गलस्य कृतत्वात् असन्निहितशिष्यज्ञापनार्थं ग्रन्थे निबन्धनाच्च । तथाहि— 'प्रमाणप्रमेये'त्यत्र प्रमाणशब्दस्य कर्तृव्युत्पत्त्या प्रमातृपरत्वात् प्रशब्दसमभिव्याहृतमाधातुना च नित्ययथार्थसर्वविषयकज्ञानलाभेन तद्वत ईश्वरस्य ग्रहणात् । सहस्रनाम च 'प्रमाणं बीजमव्यय'मिति तस्य भगवद्वाचकतां गमयति । तदिदमाह— प्रमाणेति । एकस्यैव प्रमाणशब्दस्य, सकृदुक्तत्वेप्यनेकोपकारकत्वरूपतन्त्रेणार्थद्वयं बोध्यम् ।

[उद्देशसूत्रे समासनिरूपणम्]

[1]निर्देशे यथायोगं यथावचनं विग्रहः । [2]चार्थे द्वन्द्व इति समासः । प्रमाणादीनां तत्त्वमिति [3]शेषे षष्ठी । तत्त्वज्ञानात् निःश्रेयसाधिगम इति [4]कर्मणि षष्ठी । एतावन्तो विद्यमानार्थाः । एषामविपरीतज्ञानार्थमिहोपदेशः क्रियते ।

[5]आत्मा वाऽरे इत्यादिश्रुत्युक्तदिशा आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः ।

---

[1] निर्देशे=विभागलक्षणसूत्रे । अयमभिप्रायः—सूत्रकृन्निर्देशानुगुण्येन प्रमाणप्रमेयेत्यादिसूत्रे विग्रहकाले प्रमाणावयवहेत्वाभासपदानि बहुवचनान्तानि, इतराणि त्वेकवचनान्तानि ग्राह्याणि ।

[2] सर्वपदार्थप्रधानः समासः द्वन्द्व इति वार्त्तिकतात्पर्ययोरभिमतः पाठः ।

[3] कारकाणामविवक्षा शेष इति वार्त्तिकम् । ततश्च यत्र न कारकं कारकार्थो वा विवक्ष्यते स शेषः । यथा ब्राह्मणस्य कमण्डलुरिति ।

[4] तत्त्वस्य ज्ञानं, निःश्रेयसस्याधिगम इति कर्मणि षष्ठ्यावित्यर्थः ।

[5] आत्मा वारे द्रष्टव्यः, श्रोतव्यः मन्तव्यो निदिध्यासितव्य इति आत्मादिप्रमेयतत्वज्ञानान्निःश्रेयसाधिगम इत्युक्तम् । तत्रेदं चिन्त्यते, अत्रैषां तत्त्वा यदि शास्त्रप्रवृत्तेः प्रागेव सिद्धा, तदा निष्प्रयोजनं शास्त्रे प्रयोजनाभिधानं मानान्तरसिद्धे उपदेशानपेक्षणात् । अथेहैव तन्निश्चयः, दुरुत्तरमितरेतराश्रयत्वम् । प्रवृत्तो हि प्रयोजनं निश्चिनुयात् । निश्चितप्रयोजनः च

प्रवर्तेत। न च प्रवृत्तेः प्रागेव मुनिवचनान्निश्चिनोति। प्रथमसूत्र एव प्रयोजननिश्चयेन प्रवृत्त्यनुपपत्तेः। तत्रापि च प्रवृत्त्यर्थं प्रयोजनान्तराभिधानेऽनवस्था। तदनिश्चयेप्याद्या प्रवृत्तिश्चेत् उत्तरोत्तरप्रवृत्तावपि तथात्वप्रसङ्गात्। तस्मात्प्रयोजनाभिधानमनुपपन्नमिति केचित्।

तदनुपपन्नम्। त्रिविधा हि पुंसां चित्तवृत्तयः। अनुभवः इच्छा प्रयत्नश्चेति। तत्रानुभवो नेच्छामनुविधत्ते अनिष्टस्याप्युपलब्धेः, इच्छा तु पुरुषार्थे स्वरसोत्थिता तत्साधने तथानुमानोत्थाप्या च। प्रयत्नस्तु साधनविषय एव। तत्र साधनगोचराविच्छाप्रयत्नौ प्रवृत्तिरित्युच्येते। न त्वनुभवः फलगोचरेच्छा च। येन तयोरपि प्रयोजननिश्चयापेक्षा स्यात्।

न ह्युपेक्षणीयं निष्प्रयोजनमिति नानुभूयते। नापि सुखं प्रयोजनान्तरशून्यमिति नेष्यते। नापि मुमुक्षुणाऽनपेक्षिते स्वर्गे यागादिकं तत्साधनतया नानुभूयते। पुरुषार्थसाधने त्विच्छालक्षणा प्रयत्नलक्षणा वा प्रवृत्तिर्न स्वरससिद्धा। न हि कश्चित् क्षुधी दुःखप्रहाणं तृप्तिसौहित्यसुखं वाननुसन्धायान्नमिच्छति प्रयतते वा। तस्माद्यत्र यः प्रवर्तयितव्यः, स तत्साध्यमर्थं दर्शयित्वा, यतश्च यो निवर्तयितव्यः स तत्साध्यमनर्थं दर्शयित्वेति उक्तं प्रयोजनं श्रोता कथं श्रद्धास्यति अश्रद्दधानो वा कथं प्रवर्त्स्यतीत्यवशिष्यते।

तत्रैके समाधानमाहुः—अवगतसूत्रकाराप्तभावस्तावत्तद्वचनादेव श्रद्धास्यति। यद्यप्याप्तत्वावधारणे प्रयोजनाद्यनभिधानेपि तत्सामान्यनिश्चयो भवत्येव प्रयोजनादिमदिदं शास्त्रं, आप्तोक्तत्वादिति। तथापि नासौ

प्रवृत्त्यङ्गम् । न हि प्रयोजनादिमदित्येव प्रवर्तते, किं नामास्मदभिमत-प्रयोजनादिमदिति । स च प्रयोजनादिविशेषो वचनादेवावसीयत इति सार्थकं तदभिधानम् । आप्तत्वानिश्चयेऽप्यर्थसन्देहादेव कृष्यादाविव प्रवृत्त्युपपत्तिः ।

ननु सन्देहः प्रयोजनाद्यवचनेऽपि साधकबाधकप्रमाणाभावे सति सुलभ एव । विशेषस्मृतिश्च तदर्थिनस्तद्विशेषाद्भविष्यति । मैवम् । यो हि यद्वचनात्प्रवर्तते स तद्वचनादेव विशेषस्मृतिमपेक्षते । न तु स्वातन्त्र्येण । न हि रोगार्तो ममेदं रोगनिवृत्तिसाधनं न वेति यत्र तत्रोच्छृङ्खलः प्रवर्तते । किं नामानवधृताप्तभावस्यापि वैद्यस्यैव वचनात् । अन्यथा स्वयं प्रयोजनाभिधानमनधिगच्छन्ननर्थमाशङ्केत ।

किं निष्प्रयोजनमिदं काकदन्तपरीक्षाग्रन्थवत् उताशक्यसाधनप्रयोजनवत् मृत्युहरहिममहीधरोत्तरसानुसिद्धसञ्जीवनीकथनवत्, अथानभिमत-प्रयोजनमार्यावर्तवासिनं प्रति दाक्षिणात्यस्य मातुलकन्यापरिणयनोपदेशवत् । अथानभिमतस्य शक्यस्यापि प्रयोजनस्य लघीयस्युपायान्तरे गुरुरयमुपायः । पिपासुं प्रति गीर्वाणतरङ्गिणीतीरकूपखननोपदेशवत् । एतासु चानर्थसम्भावनासु न प्रवर्तते । न प्रयोजनाभिधानेऽप्येतासामवकाशः । लोकव्यवहारोच्छेदप्रसङ्गात् । न हि कश्चिद्वैद्यवचनादेवमाशंक्य निवर्तते यथा स्वयमुत्प्रेक्ष्येति भावः ।

तच्चिन्त्यम् । उक्तार्थविस्मृतेः । न खल्वयमागमः, येनेदमाप्त-वाक्यतया प्रयोजनादेर्निश्चायकं स्यात् । तथात्वे चास्यागमतया न्याय-सूत्रत्वहानिः ।

[संशयादीनां पृथगभिधानप्रयोजननिरूपणम्]

तत्र संशयादीना प्रथग्वचनमनर्थकम्; ते च प्रमाणे प्रमेये वान्तर्भवन्तीति। न। [1]विद्याप्रस्थानभेदज्ञापनार्थत्वात्। त्रयी वार्ता

---

किञ्च तत्त्वज्ञानान्निःश्रेयसाधिगम इत्युक्तम्। तत्र वक्तरि कथमाप्तत्वं निश्चीयते। आप्तत्वं किल यथार्थवक्तृत्वं प्रत्यक्षाद्यविषये निःश्रेयसे कथं वा भवति तद्वचनं प्रमाणम्? यदि तस्य भवति किमपराद्धं जिनादिवचनेन।

अथ वक्तव्यं,—न्यायसूत्रप्रणेता मुनिर्गौतमः सर्वज्ञः; ततोऽयमाप्त इति। एवमेव सर्वेषां प्रवादे कुत्र वा आश्वासः। किञ्चान्यत्रादृष्टस्य सार्वज्ञ्यस्य न्यायसूत्रकर्तरि कल्पनं, तस्य तत्कृतत्वकल्पनं चेति कल्पनागौरवप्रसङ्गः। यदि च गोतमस्य सर्वज्ञान्तरवचनेन सार्वज्ञ्यं, यथार्थवक्तृता च सेत्स्यति तर्हि तस्य, तथात्वे किमस्ति गमकम्! तस्यापि पुनः सर्वज्ञान्तरवचनेन तदवसीयते इति चेत्—अनवस्था दुर्वारैव॥

आप्तत्वानिश्चये तु प्रवृत्तिर्दुरुपपाद्यैव। आप्तत्वानिश्चयेऽपि कृष्यादाविव अर्थसन्देहादेव प्रवृत्तिरिति ब्रुवाणो देवानांप्रिय एव। न हि महायाससाध्येऽस्मिन् कर्मणि, प्रयोजनादिसन्देहेऽपि प्रवर्तते। प्रागुक्तानर्थपरम्पराश्च कथं न शङ्क्येरन्।

तस्मान्नेदमुपदेशमात्रं, किन्तु श्रौतस्य प्रयोजनादेः न्यायेनोपपादनार्थमयं प्रयत्नः इत्येव वाच्यम्। आप्तत्वस्य स्वातन्त्र्येणाभिलषितार्थसाधकत्वेपि न्यायोपोद्बलकत्वेनासार्थक्याभावात्।

[1] अविद्या। मा.

दण्डनीतिः आन्विक्षिकीति चतस्र इमा विद्या भवन्ति । ताश्च पृथक्-प्रस्थानाः । अग्निहोत्रहवनादिप्रस्थाना त्रयी । हलशकटादिप्रस्थाना वार्ता । स्वाम्यमात्यानुविधायिनी दण्डनीतिः । संशयादिप्रभेदानु-विधायिनी आन्विक्षिकी । तस्या संशयादिप्रस्थानराहित्ये अध्यात्मविद्या-मात्रत्वात् उपनिषद्विद्यावत्त्रय्यामेवान्तर्भाव इति चतुष्ट्वं निवर्तते तस्मात्पृथ-गुच्यत इति । निःश्रेयसं तु न संशयादिपदार्थतत्त्वज्ञानात् भवति किन्तु प्रमेयतत्त्वज्ञानात् भवत्येवेति । ॥ १ ॥

[मिथ्याज्ञानदोषादीनां क्रमेणापायानन्तरमेव निःश्रेयसम् इति प्रतिपादनम् ]

तत् खलु प्रमेयतत्त्वज्ञानानन्तरमुत्पद्यते न वेत्याकांक्षायामाह—तत्त्वज्ञानादिति—

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये [1]तदनन्तरा-भावात् ॥ २ ॥**

[2]निःश्रेयसाधिगम इति सूत्रेण गतेन सम्बन्धः । अत्रात्माद्यपवर्ग-

---

[1] 'तदनन्तरापायादपवर्ग' इति विश्वनाथपञ्चाननसम्मतः पाठः । प्रचलितपाठश्चैवमेव विद्यते । 'तदनन्तराभावादपवर्ग' इति राधामोहन-विद्यावाचस्पतिगोस्वामिसम्मतः पाठः ।

निःश्रेयसमपि नाव्यवहितोत्तरक्षणावच्छेदेन । अपि तु क्रमेणैवेति, क्रमप्रतिपादनार्थं दुःखजन्मेत्यादि प्रवृत्तमिति वाचस्पतिमतम् ।

[2] प्रकृतग्रन्थप्रणेता तु तदनन्तराभावादित्येव सूत्रपाठं मनुते ।

पर्यन्तं प्रमेयं ज्ञेयम्। तन्मिथ्याज्ञानमनेकप्रकारं विद्यते। सात्मनि शरीरे तावत् आत्मा नास्तीति, अनात्मन्यात्मेति। एवं मनःपर्यन्तेषु पञ्चसु प्रमेयेषु मिथ्या[1]ज्ञानभेदा ऊह्याः। दुःखे सुखमिति [2]अत्राणे त्राणमिति। [3]सभये निर्भयमिति। [4]जुगुप्सिते हितमिति। [5]हातव्येऽप्रतिहातव्यमिति।

---

अयमेव हि साधीयान्। पूर्वसूत्रस्थनिःश्रेयसाधिगमपदसम्बन्धेनैव विवक्षितप्रमेयसिद्धेः। अन्यथा सूत्रस्याल्पाक्षरत्वेन तदभावे सूत्रत्वव्याघातः। 'अपवर्ग'पदप्रवेशे च सूत्रस्य गौरवं स्यात्। उक्तं च सूत्रलक्षणं——

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥

इति महर्षिणा पराशरेण।

एवमेवान्यत्रापि——

"लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥

इति च सूत्रलक्षणमभिहितम्। तस्मादेतद्ग्रन्थकृदुक्तदिशा गतसूत्रगतनिःश्रेयसाधिगमपदानुवर्तनं युक्तम्।

1 ज्ञानाभे मा.

2 कलत्रपुत्रक्षेत्रगृहादौ

3 धनसम्पदादौ

4 अस्थिमांसशोणितमयदेहादौ

5 जन्मादिदुःखपूर्णसंसारे

अथ प्रवृत्याद्यपवर्गान्तेषु प्रमेयेषु मिथ्याज्ञाननिवृत्तौ नास्ति कर्म, नास्ति कर्मफलमिति दोषेषु नायं दोषनिमित्तः संसार इति प्रेत्यभावे नास्ति [1]जन्तुर्जीवो सत्व आत्मा वा यः प्रेयात्, प्रेत्य च भवेदित्यपवर्गो भीषणः खल्वयं सर्वोपशमः, सर्वविप्रयोगेऽपवर्गे बहु च भद्रकं लुप्यत इति एतस्मान्मिथ्याज्ञानात् अनुकूलेषु रागः प्रतिकूलेषु च द्वेष इत्यादयो दोषा भवन्ति। [2]दोषप्रयुक्तशरीरवाङ्मनोभिः हिंसास्तेयप्रतिषिद्धमैथुनादिकमाचरन् [3]धर्मेऽधर्मान् सञ्चिनोति। प्रवृत्तिसाधनत्वात ताविमौ धर्माधर्मौ प्रवृत्तिशब्देनोच्येते। सेयं प्रवृत्तिः कुत्सित[4]स्याभिसूचितस्य जन्मनः कारणं भवति। जन्म पुनश्चेन्द्रियविषयबुद्धीनां निकायविशिष्टः प्रादुर्भावः। तस्मिन् सति दुःखम्; मिथ्याज्ञानादयः दुःखान्ता धर्मा अविच्छेदेनैव प्रवर्तमाना संसारहेतवः।

यदा आत्मादि प्रमेयतत्त्वज्ञानान्मिथ्याज्ञानमपैति; मिथ्याज्ञानापाये दोषा अपयान्ति [5]दोषापाये प्रवृत्तिरपैति। प्रवृत्त्यपाये जन्मापैति; जन्मापाये दुःखमपैति; दुःखाभावे आत्यन्तिकापवर्गः महापरमानन्दपरम[6]शिवभावः निःश्रेयसमिति। तत्त्वज्ञानं तु मिथ्याज्ञानविपर्ययेण व्याख्येयम्। २

[इति द्वाभ्यां सूत्राभ्यामभिधेयप्रयोजनसम्बन्धनिरूपणम्]

---

[1] चिन्ता मा.
[2] द्वेष ,,
[3] × × × × × × ,,
[4] स्याभिलूजि ,,
[5] दोषाभावे ,,
[6] वाक्येनानेन ग्रन्थकर्तुरस्य शैवत्वं सुज्ञेयम्।

[प्रमाणविभागः]

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः । उद्देशो लक्षणं परीक्षा चेति । तत्र [1]नामधेयेन पदार्थाना[2]मभिधानं उद्देशः । उद्दिष्टस्य [3]तत्त्वव्यवस्थापको धर्मः लक्षणम् । लक्षितस्य च, लक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा । अथोद्दिष्टस्य [4]विभागवचनमवान्तरोद्देशः—

**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥**

---

[1] प्रकारे तृतीया बोध्या ।

[2] प्रत्ययः इत्यर्थः ।

[3] कर्तृव्यव　　मा.

[4] अत एव उद्देशो लक्षणं परीक्षेति शास्त्रस्य त्रेधा प्रवृत्तिमभिधाय विभागकथनमनर्थकमित्याशङ्काऽपास्ता । विभागस्यो द्देश्यावान्तरत्वेनादोषात् । संशयनिवृत्यर्थं च विभजनमिति सर्वमनवद्यम् ।

"एकेनानेन सूत्रेण द्वयं चाह महामुनिः ।
प्रमाणेषु चतुःसंख्यं तथा सामान्यलक्षणम् ॥"

इति जयन्तोक्तिमनुरुध्य, 'प्रत्यक्षे'ति सूत्रं सामान्यलक्षणविभागपरम् । 'गर्गान् भोजय' 'यज्ञदत्तदेवदत्तावानये'त्यादाविव शब्दशक्तिस्वभावादेव न्यूनाधिकसंख्याव्यवच्छेदः । अत एवाऽवधारकश्रुत्यभावात् कुतः संख्या-नियम इत्यपास्तम् ।

[1]अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम् । [2]वृत्तिः सन्निकर्षो ज्ञानं वा । यदा [3]सन्निकर्षः तदा ज्ञानं प्रमितिः फलम् । यदा ज्ञानं तदा [4] हानोपादानोपेक्षाबुद्धयः फलमिति ।

मितेन लिङ्गेन लिङ्गिनोऽर्थस्य [5]पश्चाज्ज्ञानमनुमानम् ।

उपमानं [6]सामीप्यज्ञानम् । यथा गौरेवं गवय इति । सामीप्यं त्ववयवसामान्ययोगः । शब्दः—शब्द्यते, अनेनार्थोऽभिधीयते ज्ञाप्यते; प्रमीयतेऽनेनेति करणार्थाभि[7]धानो प्रमाणशब्द इति[8] । ॥ ३ ॥

[प्रत्यक्षलक्षणनिरूपणम्]

विभक्तानां प्रमाणानां प्रत्यक्षलक्षणमाह—

---

[1] वीप्सा चेयं षडिन्द्रियलाभार्था ।

[2] व्यापार इत्यर्थः । तथा च प्रमाणेनेन्द्रियादिना प्रमारूपफले प्रवृत्तेन फलोत्पादनानुकूलः चरमभावी सन्निकर्षः, ज्ञानं वा व्यापार उच्यते ।

[3] × × × र्षः प्रमाणं तदा—मा.

[4] हानोपेक्षाबुद्धय— ,,

[5] पश्चाद्ज्ञानं— ,,

[6] × × × × × ×— ,,

[7] धाने प्रमाणंश— ,,

[8] अनयैव दिशा, करणव्युत्पत्त्यैव प्रत्यक्ष्यतेऽनेन प्रत्यक्षमिति प्रत्यक्षादिलक्षणं बोध्यम् ।

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

इन्द्रियस्यार्थसन्निकर्षात् यदर्थविषयं ज्ञानमुत्पद्यते तत्प्रत्यक्षम्[1]। इन्द्रियाणि वक्ष्यमाणानि। अर्थाश्च घटादयः।

[सन्निकर्षं षोढा इति तत्स्वरूपविवरणम्]

सन्निकर्षः पुनः षोढा भिद्यते, संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति।

तत्र चक्षुरादीन्द्रियाणां रूपादिमद्द्रव्यैः सन्निकर्षः संयोगः। तद्गतेन रूपादिना सन्निकर्षः संयुक्तसमवायः। [2]रूपादिवर्तिना सामान्येन सन्निकर्षः संयुक्तसमवेतसमवायः। [3]श्रोत्रस्य [4]शब्देन सन्निकर्षः [5]समवायः। तद्गतेन सामान्येन सन्निकर्षः [6]समवेतसमवायः। अभावप्रत्यक्षे

---

[1] अर्थानपेक्षजन्मनः स्मृत्यादिज्ञानस्य अर्थजनितस्य परोक्षविषयस्य अनुमानादिज्ञानस्य च व्यवच्छेदार्थं इन्द्रियार्थसन्निकर्षोत्पन्नमिति।

[2] चक्षुःसंयुक्ते च घटे रूपं समवेतम्। तत्र च रूपत्वं समवायेन विद्यते।

[3] श्रोतव्य मा.

[4] शब्दस्य मा.

[5] कर्णविवरवृत्त्याकाशस्य श्रोत्रत्वात्। शब्दस्य चाकाशविशेषगुणत्वात्। गुणगुणिनोश्च समवायात्।

[6] श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्।

[1]विशेषणविशेष्यभावः सन्निकर्षः इति । सोऽयं सन्निकर्षः प्रत्यक्षकारणं भवति[2] ।

[3]अथ चक्षुःश्रोत्रयोः प्राप्यकारित्वे किं प्रमाणम्? इन्द्रियत्वमेव । चक्षुःश्रोत्रे प्राप्यकारिणी इन्द्रियत्वात्, [4]त्वगादिवत् ।

[सूत्रगतप्रत्यक्षलक्षणे विशेषणानां सार्थक्यचिन्ता]

अत्र ज्ञानग्रहणं किमर्थम्? [5]सुखादिव्युदासार्थम् । रूपज्ञानं रसज्ञानमिति रूपादिविषयनामधेयः शब्दोऽप्युपदेश्यमानं प्रत्यक्षज्ञानं शाब्दं

---

1 "भूतलं घटाभाववत्" इत्यत्र, चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ।

2 "केनचिच्चक्षुःश्रोत्रयोरुपलक्षणत्वेनोच्यत" इति अत्रत्यं वाक्यं प्रकृतानुपयुक्तत्वात्त्यक्तम् ।

3 इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमित्युक्तम् । न च तद्युक्तं, इन्द्रियस्याप्राप्यकारित्वात् । तत्र न्यायः-अप्राप्यकारि चक्षुः सान्तरग्रहणात् पृथुतरग्रहणाच्चेति । नैवम् । सान्तरग्रहणादिति हेतुश्च, सान्तरस्याप्राप्तस्य ग्रहणमित्यर्थे, प्रतिज्ञातार्थ एवायम् ततश्च हेत्वभावः कस्मात्? हेत्वर्थस्य प्रतिज्ञार्थेनाक्षिप्तत्वात् । ततश्च अप्राप्यकारि चक्षुः अप्राप्यग्रहणादित्युक्तं स्यात् । न चान्यः पक्षोऽपि साधीयान् । तस्माच्चक्षुरादि प्राप्यकार्येव ।

4 × × × × × मा.

5 अत्रैके आहुः—सुखदुःखेच्छाद्वेषप्रयत्नादीनामपि ज्ञानस्वभावत्वेन तद्व्युदासायोगात् । तथाहि—"तत्तद्रूपिणो भावा तत्तद्रूपहेतुजाः ।

भवेदित्यत आह—अव्यपदेश्यमिति । यदिदमनुपयुक्ते शब्दार्थसम्बन्धे अर्थ-ज्ञानं न तत् नामधेयशब्देन व्यपदिश्यते । कृतशब्दार्थसम्बन्धस्यापि तदुत्प-त्तिकाले [1]तादृगेव भवति । अतोऽर्थज्ञानकाले न समाख्या शब्देन व्या-प्रियते । व्यवहारकाले तु व्याप्रियते । तस्मात् [2]अशाब्दं तत् ज्ञानमिति ।

---

तत्सुखादि किमज्ञान विज्ञानाभिन्नहेतुजम्" । इति प्रमाणवार्त्तिकस्थ [३-२५१] धर्मकीर्तिवचनानुरोधेन तद्रूपहेतुजानां तद्रूपभावानां अतद्रूपहेतु-जानां अतद्भावानां च आत्ममनस्संयोगरूपैकहेतुजत्वेन तस्य ज्ञानबहिर्भावे [ज्ञानरूपत्वाभावे] मानाभावादिति । किमनेनोक्तं स्यात्? अनुमानमत्रोक्तं स्यात्—कथं? सुखादयः ज्ञानरूपिणः विज्ञानाभिन्नहेतुजत्वात् इति ।

तदिदमनुपपन्नम्—प्रत्यक्षविरुद्धत्वात् । बाह्यमपि विषयीकुर्वज्ज्ञानं विषयानुभवस्वभावतयैव प्रकाशते । न चैवं सुखमित्यस्त्यनयोर्महान्भेदः ।

ननु एकमेव संविद्रूपं हर्षविषादाद्यनेकाकारविवर्तमतो ज्ञानाकारभेद एवायमिति चेत्, मैवम् सुखादेर्विषयानुभवस्वभावस्यानुस्यूतस्याप्रतिभासात् । मृद्विकारे [मृदाकारविशेषे] घटे मृदयमितिवत् प्रकृते विषयानुभवस्वभाव-स्याप्रतीतेः ।

सुखज्ञानं दुःखज्ञानमिति प्रतिभासस्तु ज्ञानस्वभावभेदकृत एव । तस्माद्विषयग्रहणस्वभावाभावादेव सुखादिरन्य एव ग्राह्यैकस्वभावः आन्तरो धर्म इति ।

[1] × × × × मा.

[2] त् शाब्दं— मा.

ग्रीष्मे रविमरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा संयुज्यन्ते। तदेन्द्रियार्थस्य सन्निकर्षात् उदकमिति ज्ञानमुत्पद्यते, तत्किं प्रत्यक्षमित्यत आह—अव्यभिचारीति। यदतस्मिंस्तदिति भवति तद्व्यभिचारि। इतरदव्यभिचरतीति।

दूराच्चक्षुषाऽर्थं पश्यन्नवधारयति धूम इति वा रेणुरिति वा तदेव-दिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमनवधारणं प्रत्यक्षं प्रसज्येतेत्यत आह—व्यवसायात्मकमिति। [1]आत्मनि सुखादिषु च प्रत्यक्षज्ञानं मनसा इन्द्रियेणेति मन्तव्यम्। ॥ ४ ॥

[अनुमाननिरूपणम्]

**अथ तत्पूर्वकं त्रिविधमनुमानम्। पूर्ववत्, शेषवत्, सामान्यतोदृष्टं च ॥ ५ ॥**

[2]अथेत्यानन्तर्ये। अनुमानविशेषणार्थं सूत्रम्। अनुमानं तत्पूर्वकमित्यनेन समानासमानजातीयेभ्यो व्यवच्छिद्यते। तच्च ते च तानि च तत्। तत् पूर्वं यस्य तदिदं तत्पूर्वकम्। यदा तानि पूर्वं यस्येति विग्रहः, तदा समस्तप्रमाणाभिसम्बन्धात् सर्वप्रमाणपूर्वकत्वमनुमानस्य वर्णितं

---

[1] आत्मज्ञानसुखज्ञानादीनां मन इन्द्रियग्राह्यत्वेन इन्द्रियार्थसन्निकर्षोत्पन्नत्वाव्यभिचारात्।

[2] प्रत्यक्षानन्तर्यवाचकोऽथशब्दः प्रत्यक्षानुमानयोः हेतुहेतुमद्भावं सूचयति।

भवति। पारम्पर्येण पुनस्तत्प्रत्यक्ष एवावतिष्ठत इति तत्पूर्वकत्व[1]मनुमानस्योक्तं भवति।

यदा च ते पूर्वे यस्येति विग्रहः तदा लिङ्गलिङ्गिनोः व्याप्यव्यापकभूतयोः लिङ्गदर्शनमेकं प्रत्यक्षं, लिङ्गिदर्शनं द्वितीयम्। [2]ते द्वे प्रत्यक्षे पूर्वं यस्यानुमानस्य तदिदं तत्पूर्वकम्।

कः पुनरनुमानार्थः? अनुमीयतेऽनेनेति करणार्थः। किं पुनरनुमानस्य फलम्? अनुमेयविषया प्रतिपत्तिः।

[3]यदि प्रत्यक्षपूर्वकमनुमानं भवति तर्हि स्मृतिहेतौ भावनाख्ये संस्कारे, निर्णये वानुमानं प्रसज्येत। तयोरपि प्रत्यक्षपूर्वकत्वादिति, [4]नैष दोषः। [5]विज्ञानस्याविकृतत्वात्।

---

[1] त्व प्रत्यक्षस्यो मा.

[2] कतरे द्वे प्रत्यक्षे? लिङ्गलिङ्गिसम्बन्धदर्शनमाद्यं प्रत्यक्षं, लिङ्गदर्शनं द्वितीयम्। ते द्वे प्रत्यक्षे। बुभुत्सावतो द्वितीयालिङ्गदर्शनात्तु संस्काराभिव्यक्त्युत्तरं स्मृतिः, ततः पुनर्लिङ्गदर्शनमयं धूम इति।

[3] संस्कारे निर्णये चातिव्याप्तिं चोदयितुमाह — यदीति।

[4] × × × × मा.

[5] विशिष्टं हि ज्ञानं विज्ञानम्। विशेषश्च स्मृतेरन्यत्वमेव। न चेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं स्मृतिः। तस्याः संस्कारमात्रप्रभवत्वात्। तेन ज्ञानेन स्वकारणं विवक्षितम्। प्रत्यक्षसूत्रे यत इत्यध्याहारात्। तथाच स्वकारणविशेषकं स्मृतेरन्यद्विज्ञानमभिमतम्। प्रकृते संस्कारस्य

तच्चानुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं चेति त्रिविधम् । तत्र पूर्ववदिति यत्र कारणेन कार्यमनुमीयते । यथा मेघोन्नत्या वृष्टिर्भविष्यतीति । अत्र पूर्वशब्देन कारणमभिधीयते तदतिरिक्तं कार्यं शेषवदिति । कार्यमात्रमत्र शेषशब्देनाभिधीयते । ततश्च शेषवन्नाम कार्येण लिङ्गेन कारणमनुमीयते, तद्यथा नदीपूरेणवृष्ट्यनुमानमिति । सामान्यतो दृष्टं नाम [1]अकार्यकारणीभूतेन यत्राविनाभाविना लिङ्गेन [2]धर्मी गम्यते । यथा [3]बलाकया सलिलानुमानमिति ।

पूर्ववच्छेषवत्सामान्यतो दृष्टमिति पदत्रयोक्त्यैव त्रैविध्ये, त्रिविधमित्युपादानं नियमार्थम् । अनेकधा भिन्नस्य त्रिविधेनैव 'पूर्व' पदादिना सङ्ग्रह इति ।

[4]सद्विषयं च प्रत्यक्षम् । सदसद्विषयमनुमानम् । कस्मात्त्रैकाल्यग्रहणात् ॥ ५ ॥

---

प्रत्यक्षपूर्वकत्वेऽपि तादृशज्ञानाकारणकत्वेन नातिप्रसङ्गः । विभागसूत्राक्षिप्तप्रमाणसामान्यलक्षणपूर्वकं विशेषप्रमाणलक्षणं, तदपेक्षं प्रवर्तमानं नानुपजनितफलेऽप्रमाणे प्रवर्तते । प्रवर्तते चोपजनितफले । तत्तु प्रमाणमेव ।

[1] मका मा.

[2] धर्म ,,

[3] बलाकया च सलिलानुमानमेवम्—यावन्तं देशं बलाकयाऽजहद्वृत्तित्वेन प्रतीमः, तावन्तं देशमन्तर्भाव्य, वृक्षादिकं पक्षीकृत्य बलाकया सलिलमनुमेयम् ।

[4] लक्षणभेदेन प्रत्यक्षादीनां भेदमभिधाय विषयभेदप्रयुक्तमपि

[उपमानस्वरूपनिरूपणम्]

अथोपमानम्—

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ६ ॥

[1]प्रज्ञातेन सामान्यात् [2]प्रज्ञापनीयस्य [3]ज्ञापनमुपमानमिति । यथा गौरेवं गवय इति । किं पुनरत्रोपमानेन क्रियते? संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः । यथा गौरेवं गवय इति उपमानवाक्ये प्रयुक्ते गवा समानार्थं, इन्द्रियसन्निकर्षादुपलभमानोऽस्यायं गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यते । ॥ ६ ॥

[शब्दलक्षणनिरूपणम्]

अथ शब्दः—

आप्तोपदेशः शब्दः ॥ ७ ॥

[4]न शब्दमात्रमिति सूत्रार्थः । आप्तः खलु साक्षात्कृतधर्मा ।

---

तमाह—सद्विषयमिति । त्रैकाल्यग्रहणात् इति । तथा च त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते । भविष्यतीत्यनुमीयते भवतीति, अभूदिति च । असच्च खल्वतीतमनागतं चेति ।

1 प्रमितेन, प्रसिद्धेनेति यावत् ।

2 संज्ञासंज्ञिसम्बन्धस्य

3 ज्ञानकरणं

4 नन्विदमतिव्याप्तम्, प्रमाणविरुद्धक्षणिकसर्वधर्मनैरात्म्यवादिनां बुद्धर्षभादीनां उपदेशस्यापि तथात्वात् । नैवम् । आप्तोपदेशः खलु

साक्षात्करणमर्थस्याप्तिः। तया सह वर्तत इत्याप्तः। नन्वेवं सति स्वर्गापवर्गदेवतादीनि न कश्चित्पश्यतीति तत्प्रतिपादको व्यवहारो न स्यादिति चेत् न, स्वर्गापवर्गादीनामपि कस्यचित्प्रत्यक्षत्वात्। स्वर्गादयः कस्यचित्प्रत्यक्षा एव भवन्ति, सामान्यविशेषवत्त्वात् आश्रितत्वात् परमार्थत्वात् वस्तुत्वात् आगमविषयत्वाच्च। एवं च यस्य प्रत्यक्षाः स्वर्गादयस्तस्याप्तस्योपदेशः शब्द इति लक्षणं युक्तमेव। ॥ ७ ॥

**स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥**

यस्येह दृश्यतेऽर्थः स दृष्टः। यस्यामुत्र प्रतीयतेऽर्थः सोऽदृष्टः। एवं ऋषिलौकिकवाक्यानां विभाग इति। किमर्थं पुनरिदमुच्यते, अनेन प्रमाणेन अर्थजातं यथावत्परिज्ञायमानमपवर्गाय भवति। अनवगम्यमानं तु संसारायेति, एतदर्थप्रकाशनार्थमिदं सूत्रम् ॥ ८ ॥

[अथ प्रमेयनिरूपणम्]

अथ प्रमेयम्—

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥**

---

मानम्, आप्तश्च यथार्थवक्ता। ऋष्यार्यम्लेच्छाश्च तथाविधाः। सर्वांशे प्रमात्वाभावेऽपि तेषां, विवक्षितविषये तत्तत्त्वे आप्तत्वोपपत्तिः। तेषामेव वचनं प्रमाणम्। न तु अनाप्तानां बुद्धर्षभादीनामिति नातिव्याप्तिः ॥

[1]यथावचनं विग्रहः। अन्यदपि प्रमेयमस्ति। यस्य तत्त्वज्ञानान्निःश्रेयसं भवति। तदिदं प्रमेयमिति तुशब्देन ज्ञापयति। अत्रात्मा सर्वस्य द्रष्टा, सर्वस्य भोक्ता। तस्य भोगायतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोक्तव्या अर्थाः। भोगो बुद्धिः। सर्वविषयमन्तःकरणं मनः। शरीरेन्द्रियार्थबुद्धिसुखदुःखवेदनानां निर्वृत्तिकारणं प्रवृत्तिः। दोषा रागादयः। आत्मनः पूर्वपूर्वशरीराद्वियुक्तस्य यावदपवर्गशरीरमुत्तरोत्तरसम्बन्धः प्रेत्यभावः। [2]ससाधनसुखदुःखोपभोगः फलम्। बाधनालक्षणं दुःखम्। जन्ममरणप्रबन्धोच्छेदनात् सर्वदुःखप्रहाणम् अपवर्गः। सुखं पुनः कस्मादस्मिन्नोक्तं? वैराग्यज्ञापनार्थम्। कथं? मोक्षमाणः सर्वं दुःखं भावयेदिति, तस्य दुःखभावनार्थः सुखस्यानपदेश इति। [3][दुःखपरिभावनया अनासक्तिर्विषयेषु जायते। अनासक्त्या पुनर्भवप्रार्थनालक्षणा तृष्णा विच्छिद्यते। तृष्णाविच्छेदात् पुनर्भवसाधनानुपादानम्। तदनुपादानात् केवलमुत्पन्नानामुपभोगेन क्षयः। ततश्चापवर्ग इति। एतावदर्थप्रतिपादनार्थमनभिधानं सुखस्येति।]॥ ९॥

[आत्मनिरूपणम्]

तत्र आत्मा प्रत्यक्षतो न गृह्यते, किमाप्तोपदेशमात्रात्प्रतिपत्तव्य इति, किं वाऽनुमानात्प्रतिपत्तव्य इति,—?

---

[1] 'अत्र समासश्चार्थः'। इति मूलकोशगतं वाक्यं प्रकृतानुपयुक्तत्वेन प्रतिभासनात्त्यक्तम्॥

[2] गमसाध मा.

[3] [ ] एतच्चिह्नान्तर्गतभागः मूलकोशे त्रुटितः। अतोऽत्र मयैव यथासन्दर्भं ग्रन्थः पूरितः।

**इच्छाद्वेषप्रयत्नसुखदुःख[1]ज्ञानान्यात्मनो लिङ्गमिति ॥ १० ॥**

यज्जातीयार्थस्य सन्निकर्षात्सुखमात्मोपलब्धवान्; तज्जातीयमर्थं पुनः पुनः पश्यन्नुपादातुमिच्छति, सेयमादातु[2]मिच्छा; [3]एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धाना[4]द्भवति लिङ्गमात्मनः[5]।

यथा यज्जातीयोऽर्थः सुखहेतुः प्रसिद्धः तज्जातीयमर्थं प्राप्तुं प्रयतते। तथा सोऽयं प्रयत्नोप्येकमनेकार्थ[6]दर्शिनमनुमापयति। एतेन दुःखहेतावपि प्रयत्नो व्याख्यातः। सुखदुःखस्मृत्या चायं [7]तत्साधनमादधानः सुखदुःखे उपलभते, इत्यतः सुखदुःखे अपि तत्साधनस्मर्तुरात्मनो लिङ्गम्। [[8]परतन्त्रमगुणत्वात् रूपादिवदित्यात्मसिद्धिः।] ॥ १० ॥

---

[1] खान्यत्मनो ज्ञानलिङ्गनि मा.

[2] मितस्येच्छा— ,,

[3] येनेकादा— ,,

[4] भवन्ति — ,,

[5]तथा चायमर्थः— यश्चासावनुभविता स्मर्ता, अनुमाता, ईप्सिता, च स आत्मेति।

[6] दर्शनं— मा.

[7] × × × × × × धानः मा

[8] मूलकोशगतेयं पङ्क्तिः लिपिकृत्प्रमादतो जाता। इयं पुनरानुपूर्वी सम्भाव्यते—इच्छादि परतन्त्रं गुणत्वात् रूपवदिति। ततश्च, गुणाः परतन्त्रा भवन्तीति हि न्यायः। अयावद्द्रव्यभावित्वेन शरीरगुणत्वप्रतिषेधे भवत्यात्मगुणत्वमिति परिशेषात्सिद्धत्यात्मेति।

[शरीरनिरूपणम्]

अथात्मनो भोगायतनं—

चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥

का पुनरियं चेष्टा? हिताहितप्राप्तिपरिहारार्थः परिस्पन्दः। तस्य आश्रयः शरीरम्। कथमिन्द्रियाणां शरीरमाश्रयः? शरीरानुग्रहोपघातानुविधायित्वात्तेषाम्। कथमर्थाश्रयः? अर्थनिमित्तसुखसंवेदनायतनत्वात्। ॥ ११ ॥

[इन्द्रियनिरूपणम्]

शरीरस्य कानि पुनर्भोगसाधनानि?—

घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥

ननु नेदमिन्द्रियाणां लक्षणसूत्रं, इन्द्रियोद्देशमात्रावगमात्। स्वविषयग्रहणे कार[1]णानि तानीन्द्रियाणीति। घ्राणादीनामुपदेशेनैव लक्षणस्योक्तत्वात्। कथं? जिघ्रत्यनेनेति घ्राणम्। रसयत्यनेनेति रसनम्। चष्टेऽनेनेति चक्षुः। त्वक्स्थानमिन्द्रियं त्वक्। त्वक् संवरण इति धातुः; संव्रीयतेऽनेनेति त्वक्। श्रोत्रं शृणोत्यनेनेति कृत्वा श्रोत्रमिति। भूतेभ्य इति नानाप्रकृतीनामेषां सतां विषयनियमो भवेत्; [2]नैकप्रकृतीनां इति दर्शयति। ॥ १२ ॥

---

[1] रण—　　　　मा.

[2] × × × × × × × ति　मा

[भूतानां स्वरूपनिर्वचनम्]

कानि पुनरिन्द्रियकारणानि? आह—

पृथिव्यापस्तेजोवायुराकाशमिति भूतानि ॥ १३ ॥

[1]इन्द्रियप्रकृतित्वं भूतलक्षणम् ।

[अर्थनिरूपणम्]

इमे खलु—

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥

[2]अत्र पृथिव्यादीनि गुणाश्चेति चार्थे द्वन्द्वः । पृथिव्यादिग्रहणेन पृथिव्यप्तेजांसि बाह्यकरणग्रा[3]ह्याणि व्यपदिश्यन्ते । गुणग्रहणेन च सर्व आश्रितो गुण इति संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहद्रवत्ववेग-संस्कारकर्मसामान्यविशेषा उपादीयन्ते । अनाश्रितश्च समवायः; तद्धर्म-त्वाद्गुण इति ।

गन्धरसरूपस्पर्शशब्दास्तर्हि पृथङ्न वक्तव्याः, गुणग्रहणेन ग्रहणा-दिति । न अन्यार्थत्वात् । गन्धादीनां पृथगभिधानं इन्द्रिय[4]विशेष-

---

[1] × × × × × × × मा.

[2] पृथिव्यादीनां गुणा इति षष्ठीसमासः, पृथिव्यादीनि गुणाश्चेति द्वन्द्वः, पृथिव्यादयो गुणा येषामिति बहुव्रीहिरिति, विग्रहोऽत्रानेकधा भवति । तस्मात्संशयः, तत्त्वमाह—अत्रेति ।

[3] ह्याणीति— मा.



[4] यविषयनि— ,,

नियमख्यापनार्थम् । घ्राणादीनि हीन्द्रियाणि गन्धादिषु नियतानि । [1]अन्यत्र चानियतानि । तत्र पृथिव्यप्तेजांसि चक्षुस्स्पार्शनयोर्ग्राह्याणि । शेषश्च गुणराशिः, सत्तागुणत्वे तु सर्वेन्द्रियग्राह्ये, समवायाभावौ च । ॥ १४ ॥

[बुद्धिलक्षणनिरूपणम्]

अथ बुद्धेरवसरप्राप्ताया लक्षणमाह—

बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥

एतैः पर्यायशब्दैर्योऽभिधीयते पदार्थः सा बुद्धिरिति । पर्याय-शब्दाः कथं लक्षणं? व्यवच्छेदहेतुत्वात् ।

यदाहुः—बुद्धेर्ज्ञानं वृत्तिः, आत्मन [2]उपलब्धिः इति तन्निराकरणार्थं चेदं सूत्रम् । समानार्था एते शब्दाः, न च समानार्थैश्शब्दैरर्थभेदः कथयितुं युक्त इति । ॥ १५ ॥

[मनोलक्षणनिरूपणम्]

अथ मनसो लक्षणमाह—

युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥

[3]युगपत्खलु घ्राणादीनां च सन्निकर्षेषु सत्सु यद्युगपत् ज्ञानं नोत्पद्यते,

---

1 अत्र चा— मा.

2 उपलब्धिरिति । वृत्तिरिति शेषः ।

3 युगपत्—एककाल इत्यर्थः । ज्ञानानामनुत्पत्तिर्यतः स एव धर्मः

तेनानुमीयते, अस्ति तदिन्द्रियसंयोगसहकारिनिमित्तान्तर[1]मव्यापि यस्य सन्निधानाऽसन्निधानानुविधानात् ज्ञानस्योत्पत्त्यनुत्पत्ती भवत इति । कुतः? कारणवैकल्ये कार्यप्रतिबन्धदर्शनात् इति मनसः सिद्धिः ।

[2]ननु युगपदनुत्पत्तिः ज्ञानधर्मः । तत्कथं मनसो लिङ्गम्?; न ज्ञानानामेव पक्षीकरणात् । कथं? रूपादिज्ञानानि चक्षुरादिव्यतिरेकेणाधिष्ठायकान्तरापेक्षाणि अयुगपदुत्पद्यमानत्वात् शिल्पहस्ताद्यधिष्ठा[3]यकान्तरापेक्षवास्यादिजन्यक्रियावत्, यदधिष्ठायकान्तरं तन्मन इति । ॥ १६ ॥

[प्रवृत्तिस्वरूपनिरूपणम्]

अथ प्रवृत्तिलक्षणम्—

प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ॥ १७ ॥

---

मनसो लिङ्गमितरभेदसाधकमित्यर्थः । स च धर्मः प्रत्यक्षासाधारणकारणेन्द्रियसंयोगाश्रयाणुत्वम् । नानेन्द्रियाणां सत्यपि विषयसन्निकर्षे यत्सम्बन्धादेकेन्द्रियं ज्ञानं जनयति, यदसम्बन्धादपरं ज्ञानं न जनयति तदेकाणुभूतं सुखादिसाक्षात्काराऽसाधारणकारणं निखिलज्ञानजनकं मनः इति ।

[1] × × × × स्य मा. रूपादिव्यावृत्त्यर्थमुक्त इन्द्रियसंयोगीति । सहकारीत्याकाशस्य, निमित्तान्तरमित्यालोकस्य, आत्मनिवृत्यर्थं चाव्यापीत्युक्तम् ।

[2] न तु— मा.

[3] यय— „

मनोऽत्र बुद्धिरित्यभिप्रेतम् । बुध्यतेऽनेनेति बुद्धिः । [1]शरीरेण वाचा मनसा चारम्भः औदासीन्यप्रच्युतिः प्रवृत्तिः । सा पुनः पुण्या चापुण्यां च प्रत्येकं दशविधा । पुण्या कायेन, परित्राणं, दानं, परिचरणमिति । वाचा सत्यं हितं प्रियं स्वाध्याय इति । मनसा दया धनास्पृहा श्रद्धा चेति । विपर्ययेण पापा दशविधैव । सेयं [2]प्रवृत्तिः क्षणिका च सती न जन्महेतुरिति युक्तं, ततश्च द्वितीयसूत्रव्याघातः ।

न, प्रवृत्तिफले प्रवृत्त्युपचारात् । प्रवृत्तिसाधनत्वाद्धर्माधर्मावत्र प्रवृत्तिरित्युच्येते । जन्यपुण्यापुण्यद्वारा जन्महेतुरिति । ॥ १७ ॥

[दोषलक्षणविवेचनम्]

अथ दोषानाह—

प्रवर्तनालक्षणा [3]दोषाः ॥ १८ ॥

का पुनरियं प्रवर्तना, ययाऽवशः प्रवर्तते । तं प्रवर्तमानं रागादयः प्रवर्तयन्तीति । सेयं प्रवृत्तिहेतुत्वात्प्रवर्तनेत्युच्यते । ॥ १८ ॥

[प्रेत्यभावस्वरूपविवरणम्]

अथ प्रेत्यभावं लक्षयति—

पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

---

[1] शरीरपदस्य प्रत्येकमन्वयात् वागारम्भो बुद्ध्यारम्भः शरीरारम्भ इति त्रैविध्यं प्रवृत्तेर्बोध्यम् ।

[2] प्रवृत्तित्वं च प्रवृत्तोऽस्मीति प्रतीतिसिद्धजातिविशेषो रागजन्यतावच्छेदकः ।

[3] बहुवचनं चात्र रागद्वेषमोहात्मकलक्ष्यत्रयज्ञापनाय ।

पूर्वोपात्तशरीरादिपरित्यागादन्यशरीराद्युपसम्पत्तिः [1]प्रेत्यभावः। पुनर्ग्रहणं संसारानादित्वज्ञापनार्थम् । सोऽयं संसारः कस्य? किमात्मनो मनसो वेति । यदा क्रियामधिकृत्योच्यते तदा मनसः, तद्धि संसरति । अथोपभोगमधिकृत्योच्यते तदाऽऽत्मनः स हि सुखदुःखे उपभुंक्ते । ॥ १९ ॥

[फलनिरूपणम्]

प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥

शरीरादिजन्यं सर्वं फलं धर्माधर्म[2]प्रवर्तकत्वादिति । ॥ २० ॥

[दुःखलक्षणनिरूपणम्]

बाधनालक्षणं दुःखम् ॥ २१ ॥

एतदेव शरीरादीनां [3]बाधनानुषङ्गात् दुःखमित्युच्यते । ॥ २१ ॥

[मोक्षस्वरूपविमर्शः]

तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

---

[1] प्रेत्य-मृत्वा, भावो जन्म । प्रेत्यभावेत्यनेन जननमरणाद्यूर्मिमालाविलसंसारस्य सुखखद्योततां विबोध्य, संसारापनुत्तये, उपदिश्यते प्रमाणादिज्ञानम् । मरणं च चरमप्राणध्वंसो वा चरमप्राणविभागो वेति बोध्यम् ।

[2] पूर्वकत्वादिति मा.

[3] बाधना-पीडा, स्वतो द्वेषविषयता । शरीरेन्द्रियार्थेषु दुःखसाधनेषु, सुखेषु दुःखसंस्पृष्टेषु च, दुःखत्वव्यपदेशः दुःखसाधनत्वात्तत्कारणको ध्येयः ।

तेन–[1]शरीरादिना, दुःखे[2]नात्यन्तविमुक्तिरपवर्गः। उपात्तस्य जन्मनः उपभोगाद्धानम्। अन्यस्य च धर्माधर्माख्यकारणाभावात् अनुपादानम्। एतामात्मनोऽवस्थां अपर्यन्तां अपवर्गं वेदयंते। तदभयमजरममृत्युपदं ब्रह्म क्षेमप्राप्तिरिति।

[3]केचिदात्यन्तिकसुखाभिव्यक्तिमपवर्गं मन्वते। तन्न। प्रमाणाभावात्। नन्वागमादेतद्गम्यते "मुक्तः सुखी भवतीति"। तर्हि स आगमो विचारणीयः। किमयं नित्येन सुखेन योगमाह? उतात्यन्तिकेन दुःखेन वियोगमाहेति। दृष्टश्च दुःखाभावेपि सुखशब्दप्रयोगो बहुधा। तत एव हि ज्वरादिभिर्वियुक्ता लौकिका आचक्षते—"सुखिनः संवृत्ताः स्म" इति। तद्वदागमोऽपि दुःखाभावे सुखशब्दं प्रयुङ्क्ते इति युक्तमेव। ॥ २२ ॥

[इति प्रमेयस्वरूपविभागादिविवरणम्]

---

[1] शरीरादिनां– मा.

[2] अत्यन्तविमुक्तिः–शाश्वतोच्छित्तिरित्यर्थः। तेन–शरीरादिनेति। "अशरीरं वा व सन्तं न प्रियाऽप्रिये स्पृशतः" इति शरीरत्वावच्छिन्नस्य दुःखजनकत्वेन तदभावे सर्वदुःखनिवृत्तिरिति सूचनायैवमुक्तिः।

[3] अयमत्र पूर्वपक्षसंक्षेपः—तद्ध्यभिलषितं चेतनस्य येन सुखावाप्तिः दुःखनिवृत्तिर्वा भवति! दुःखनिवृत्तिरपि सुखप्राप्त्यर्थमेवाभिलषिता। तथा चानुभवः—"सुखमेव मे स्याद्दुःखं मनागपि मा भूत्" इति। तथाच परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वनियमेन दुःख-

[संशयस्वरूपनिर्वचनम्]

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥**

अत्र समानधर्मोपपत्तेः अनेकधर्मोपपत्तेः विप्रतिपत्तेश्च त्रिविध एव संशय इति इतरपदविशेषणाद्भवति सूत्रार्थः[1]। अत्र समानधर्मादिभ्यो ह्युत्पन्नो विषयविशेषं नावधारयति यः प्रत्ययः स संशय इति संशयलक्षणम्।

अत्र समानशब्दः सादृश्यवचनः। यथा [2]यावदहमर्थौ पूर्वमद्राक्षं

---

निवृत्तौ सुखप्राप्तिरवश्याभ्युपेया। तस्मान्मुक्तौ सुखावाप्तिरेष्टव्येति। तथा च प्रमाणम्—"मुक्तः सुखीभवती"ति।

तदेतन्मतं दूषयितुमाह—प्रमाणाभावादिति। अयमत्र सिद्धान्त-सारांशः— मुक्तः सुखी भवतीति' श्रुतेः यजमानप्रस्तरन्यायेन गौणार्थत्व-सम्भवेन दुःखनिवृत्त्यर्थत्वोपपत्तेः। भारापगमे सुखी संवृत्तोहमित्याद्यनुभवा-नुरोधेन सुखावाप्तेर्दुःखनिवृत्तावुपक्षीणत्वात्। यत्तु "परस्परेत्यादि तदत्य-न्तमचारु। मानाभावात्। तस्मान्मुक्तः सुखीभवतीत्यादि श्रुतेरर्थान्तर-सम्भवेन आत्यन्तिकदुःखनिवृत्तिर्मोक्ष इत्युक्तं युक्तमेव।

[1] अयमाशयः—प्रकृतग्रन्थप्रणेता वार्तिकानुयायीति निश्चिनुमः। यतः स भाष्योक्तमपि संशयकारणानि पञ्चेत्युक्तं पक्षं नाभ्यलषत्। अस्मिन्पक्षे संशयकारणानि त्रीण्येव। सूत्रभाष्ये चान्यथोपपाद्य त्रीण्येव संशयकारणा-नीति वक्तुर्मते उपलब्ध्यनुपलब्ध्यव्यवस्थात इति पदद्वयं उक्तसंशयभेदत्रय-स्यैव विशेषणमिति।

तयोर्यो धर्म ऊर्ध्वत्वादिलक्षणो वर्तते, तेन धर्मेण सदृशोऽयं धर्म उपलभ्यत इति । तस्योपपत्तिरध्यवसायः उपलब्धिरित्यर्थः । सोऽयं साधारणो धर्म उपलभ्यमानः निर्णायकमजानतः संशयहेतुः ।

किं केवल इति ? न, किं तर्हि ? उपलब्ध्यनुपलब्ध्यव्यवस्थातश्च । किमेतावन्मात्रं कारणमिति, नेत्याह— **विशेषापेक्ष इति** । समानं त्वर्थमुपलभते उपलब्ध्यनुपलब्धी न व्यवतिष्ठेते । इदं तथा, नेदं तथेति वा विशेषाकाङ्क्षा च यदि भवति अथ सन्देहो भवति ।

किमिदं समस्तं कारणमुताऽसमस्तं कारणमिति । समस्तमिति ब्रूमः । अन्यतमापाये संशयादर्शनात् । नानार्थावमर्शनं विमर्शनम् । संशीतिः संशयः भावसाधनम् । करणसाधनं वा संशय्यतेऽनेनात्मेति ।

एतेनानेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति व्याख्यातम् । असाधारणधर्मोऽनेकधर्मः इत्यनेन समासपदेनाभिधीयते । समानासमानजातीयविशेषव्यवच्छेदकत्वात् । समानजातीयं चासमानजातीयं चानेकम् । तस्मादनेकस्माद्विशेषोऽनेकधर्मः । यथा शब्दे विभागजत्वाद्द्रव्यं गुणः कर्म वेति संशयः । न हि द्रव्यगुणकर्मणामन्यतमं विभागाज्जायमानं दृष्टम् । विभागजत्वं शब्दस्यासाधारणो धर्मः, अतः सर्वतो व्यावृत्तेरयं संशयहेतुः ।

**विप्रतिपत्तेरिति** । [1]व्याहतमेकार्थदर्शनम् । विप्रतिपत्तिः, व्याघातः [2]विरोधोऽसहभाव इति । यथा असत्या[3]त्मेत्येकं दर्शनं,

---

[1] व्याधातमे—मा.

[2] वरोधो— ,,

[3] त्मेकं— ,,

[1]सत्याऽऽत्मेत्यपरं दर्शनम् । न च सद्भावासद्भावौ [2]सहैकत्र भवत इति संशय इति । सोऽय[3]मेवंभूतः संशयो विचाराङ्गतयोपादीयते । संशयवद्विपर्ययोऽ[4]पि न विचाराङ्गम् । यथा स[5]न्दिग्धस्तद्विशेषप्रतिपत्तये प्रयतते नैवं विपर्यस्त इति । अतो विचारानङ्गत्वाद्विपर्ययो नाभिधीयत इति । ॥ २३ ॥

[प्रयोजनलक्षणनिर्वचनम्]

[6]यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २४ ॥

व्यवसायोऽधिकारः । कस्य व्यवसायः ? सुखदुःखतत्साधनानाम् । इदं सुखसाधनमिति बुध्वा सुखाप्तये प्रयतते, इदं दुःखसाधनमिति वाऽधिगम्य दुःखहानायेति । सुखदुःखाप्तिहानाभ्याम् अयं लोकः प्रसज्यत इति, सुखदुःखाप्तिहानी प्रयोजनमित्यनेन सर्वार्थाः संगृह्यन्ते । ॥ २४ ॥

---

1 सत्यत्म मा.
2 सहे— ,,
3 मेकं × × × ,,
4 पि विचा— ,,
5 न्दस— ,,

6 अधिकृत्य—उद्दिश्य इत्यर्थ इत्याहुरेके । इच्छां विषयीकृत्येत्यर्थः । तथा च इच्छाविषयत्वमेव प्रयोजनत्वम् । अन्येच्छानधीनेच्छाविषयत्वं स्वतः प्रयोजनत्वम् । अन्येच्छाधीनेच्छाविषयत्वं गौणप्रयोजनत्वमिति परिष्कारः ।

[दृष्टान्तलक्षणाभिधानम्]

[1]लौकिक[2]परीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥

बुद्धिसाम्यविषयो दृष्टान्त इति सूत्रार्थः। एवं च नाकाशाद्यवरोधः। यदि पुनरवधार्यते लौकिकानां परीक्षकाणां च यो विषयः स दृष्टान्त इति। अलौकिकोऽर्थः न दृष्टान्तस्स्यादाकाशादिरिति। उदाहरणत्वेन तु लौकिकपरीक्षकबुद्धिविषयस्याभिधानमिति। ॥ २५ ॥

[इति न्यायपूर्वाङ्गलक्षणप्रकरणम्]

[सिद्धान्तलक्षणनिरूपणम्]

अथ सिद्धान्तः—

तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥

इदमित्थंभूतं चेत्यनुज्ञातमर्थजातं 'सिद्धम्'। सिद्धस्य संस्थितिः[3] इत्थंभावव्यवस्था धर्मनियमः। तन्त्रम्–इतरेतराभिसम्बद्धस्यार्थसमूहस्योपदेशः शास्त्रम्। तन्त्रमधिकरणमेषामर्थानां ते तन्त्राधिकरणाः। योऽर्थो न शास्त्रतस्तस्याऽभ्युपपगमो न सिद्धान्त इति। ॥ २६ ॥

---

[1] यथार्थकोटिनिश्चयशून्यः प्रतिपाद्यः।

[2] परीक्षकेति। यथार्थकोटिनिश्चयवान्प्रतिपादकः। साध्यसाधननिश्चयविशेष्योऽन्वयदृष्टान्तः। साध्याभावसाधनाभावनिश्चयिविशेष्यो व्यतिरेकदृष्टान्तः।

[3] सिद्धस्य संस्थितिः सिद्धान्त इति योज्यम्।

[सिद्धान्तस्य सर्वतन्त्रादिभेदेन चातुर्विध्यनिरूपणम् ]

तन्त्रभेदात्तु स चतुर्विधः—

सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २७ ॥

एताश्चतस्रः संस्थितयोऽर्थान्तरभूताः । ॥ २७ ॥

[सर्वतन्त्रसिद्धान्तलक्षणम् ]

तासाम्—

सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥

सर्वेषां सम्प्रतिपत्तिविषयः सर्वतन्त्रसिद्धान्त इति सूत्रार्थः । यथा प्रमाणानि प्रमेयसाधनानि । ननु दृष्टान्तात्सर्वतन्त्रसिद्धान्तो न भिद्यते, सम्प्रतिपत्तिविषयः साधर्म्यादिति* । भिद्यत एव वादिप्रतिवादिनोरेव प्रसिद्धो दृष्टान्तः, न चैवं [1]सर्वतन्त्रसिद्धान्त इति । ॥ २८ ॥

[प्रतितन्त्रसिद्धान्तनिरूपणम् ]

[2]समानतन्त्रसिद्धः परतन्त्राऽसिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥

सामान्यविशेषवतां नियमेनाभ्युपगमः सिद्धान्त इति । यथा

---

[1] अनुमानागमयोराश्रयो दृष्टान्तः । नैवं सर्वतन्त्रसिद्धान्त इत्यपि वैलक्षण्यं बोध्यम् ।

[2] सूत्रस्थः समानशब्दः एकार्थः । ततश्च एकतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्त इति लक्षणमुक्तं भवति ।

* सम्प्रतिपत्तिविषयत्वसाधर्म्यात् इति स्यात् ।

[1]भौतिकानीन्द्रियाणीति योगानामेवमभौतिकानीति सांख्यानामेव भवति । ॥ २९ ॥

[अधिकरणसिद्धान्तनिरूपणम् ]

यत्सिद्धावन्य[2]प्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ३० ॥

वाक्यार्थसिद्धौ तदनुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्तः इति सूत्रार्थः । [3]इन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यां एकार्थग्रहणादिति । [4]अत्रानुषङ्गिणोऽर्थाः, इन्द्रियनानात्वं नियतविषयाणीन्द्रियाणि, ज्ञातुर्ज्ञानसाधनानीत्यादयः ॥ ३० ॥

---

[1] भौतिकानीति । योगमते इन्द्रियाणि भौतिकानि । यथोक्तं भाष्ये—"भौतिकत्वसिद्धमिन्द्रियाणामिति । अभौतिकानीन्द्रियाणीति तु सांख्यदर्शनम् । यथा च सांख्यकारिकाव्याख्यायां—न वयमत्र योगदर्शनमनुसरामः । अस्मन्मते इन्द्रियाणामभौतिकत्वात्" इति ।

[2] प्रकरणपदं प्रकृतपरम् । यस्य सिद्धौ सत्यामेव अन्यस्य प्रकृतस्य सिद्धिर्भवति स इत्यर्थः ।

[3] इन्द्रियव्यतिरिक्तेति । ज्ञानादिकं साधिष्ठानं गुणत्वात् रूपादिवत् इत्याद्यनुमानेन अनुभूयमानगुणादेः कश्चनाश्रयः प्रकल्प्यः । न च प्रत्यक्षसिद्धो देह एव सोऽस्त्विति वाच्यम्, शैशवकालीनपूर्वानुभूतप्राथमिकप्रवृत्त्याद्यनुपपत्तिप्रसङ्गात् । नापीन्द्रियम् आत्मा ; विनाशेऽपि प्राक्तनानुभूतस्मरणसद्भावेन व्यभिचरितत्वात् । तस्माद्देहेन्द्रियान्तःकरणाद्यतिरिक्तः, ज्ञानादिगुणाश्रयः आत्मा समाश्रयणीय इति ।

[4] इन्द्रियव्यतिरिक्तस्यात्मनः सिद्धौ इन्द्रियनानात्वं सेत्स्यति ।

[अभ्युपगमसिद्धान्तलक्षणम्]

[1]अपरीक्षिताभ्युपगमात् [2]तद्विशेषपरीक्षणम् अभ्युपगम-सिद्धान्तः ॥ ३१ ॥

असूत्रितो योऽर्थः शास्त्रे चाभ्युपगतः सोऽभ्युपगमसिद्धान्तः। यथा नैयायिकानां मन इन्द्रियमिति। वैशेषिकाणां नैयायिकानां च श्रोत्रमाकाशमिति। ॥ ३१ ॥

[इति सिद्धान्तलक्षणविभागादिविमर्शः]

[अवयवलक्षणादिनिरूपणम्]

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ३२ ॥

[3]अवयवानां विभागोद्देशार्थं सूत्रम्। अनुमानवाक्यस्य चैते अवयवा भवन्ति। ॥ ३२ ॥

---

तथा च यदर्थसिद्धिं विना शब्दादनुमानाद्वा योऽर्थः न सिद्ध्यति सोऽधि-करणसिद्धान्तः।

[1] अपरीक्षितः—साक्षात्सूत्रानधीनः योऽभ्युपगमस्तस्मात्।

[2] विशेषपरीक्षणं, विशेषधर्मसिद्धिः।

[3] अवयवानामिति। प्रतिज्ञाद्यन्यतमत्वम् अवयवलक्षणं बोध्यम्। दशावयवानेके पठन्ति—१. प्रतिज्ञा (अहिंसा परमो धर्मः) २. प्रतिज्ञा-विभक्तिः (जैनशास्त्रानुसारेण अहिंसा धर्मः) ३. हेतुः (अहिंसकानां देव-प्रियत्वात्) ४. हेतुविभक्ति (अहिंसकेभ्योऽन्ये धर्मलोकेषु वस्तुन्न लभन्ते) ५. विपक्षः (याज्ञिकहिंसापरायणा अपि स्वर्गे वसन्तीति) ६. विपक्ष-प्रतिषेधः (अहिंसकाः कदापि न देवप्रिया भवन्तीति) ७. दृष्टान्तः

[प्रतिज्ञालक्षणम्]

तेषां—

[1]साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥

प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यः। तस्य निर्देशः परिग्रहवचनम्। अस्योदाहरणं अनित्यः शब्द इति। ॥ ३३ ॥

[हेतुलक्षणम्]

उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥ ३४ ॥

उदाहरणेन साधर्म्यमुदाहरणसाधर्म्यम्। यो धर्मः साध्ये भवति, तथाभूत एवोदाहरणेऽपीति। न पुनः स एव अन्यधर्मस्यान्यत्राप्रसङ्गात्।

एवंलक्षणात् उदाहरणसाधर्म्यात् साध्यसाधनं साध्यस्य प्रज्ञापनं हेतुः। उत्पत्तिधर्मकत्वादनित्य इति। ॥ ३४ ॥

---

(अर्हन्तो हिंसाभयादन्नं न पचन्ति) ८. आशङ्का (अन्ये पुरुषा यदन्नं पचन्ति तदन्नमर्हन्तोऽपि भुञ्जन्ति। अतस्तेऽपि हिंसादोषवन्तः) ९. आशङ्काप्रतिषेधः (अर्हदुद्देशेनैव यन्न पच्यते तद्गतहिंसादोषेण ते न दुष्यन्ति।) १०. निगमनम् (अतोऽहिंसा परमो धर्मः)।

[1] साध्यनिर्देश इति। साध्यं विधेयतावच्छेदकावच्छिन्नं तस्य निर्देशः, पक्षतावच्छेदकावच्छिन्ने तद्बोधकः शब्दः प्रतिज्ञेत्यर्थः इति गोस्वामिभट्टाचार्याः।

अथवा साध्यो विधेयधर्मविशिष्टो धर्मी पक्षस्तस्य निर्वचनं प्रतिज्ञेत्यर्थः। तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकतापर्याप्त्यधिकरणपर्याप्तावच्छेदकताकप्रकारतानिरूपकबोधजनकवाक्यत्वं प्रतिज्ञायाः लक्षणम्।

[किमेतावद्धेतुलक्षणम् ? नेत्युच्यते]

किं तर्हि —

तथा वैधर्म्यात् ॥ ३५ ॥

अत्राप्युदाहरणवैधर्म्यादित्युदाहरणेनैव वैधर्म्यं वाच्यम् । नानुदाहरणेनेति वैधर्म्यमेवोदाहरणेन न साधर्म्यमपीति । [1]उदाहरणं तु, नेदं निरात्मकं जीवच्छरीरं, निरात्मकत्वे घटादिवदप्राणादिमत्त्वप्रसङ्गात् । तावेतौ वीतावीतहेतू लक्षणाभ्यां पृथगभिहितौ । तत्र स्वरूपेणार्थपरिच्छेदकत्वं वीतधर्मः । अवीतः पुनः परतत्त्वप्रतिषेधेनैव प्रवर्तत इति । एकस्य विधीयमानोऽर्थः अपरस्य प्रतिषिध्यमानः । द्वावपि वीतावीताव्यभिचारात्[2]......... ॥ ३५ ॥

[उदाहरणलक्षणम्]

[3]साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥ ३६ ॥

अस्योदाहरणोपलक्षणम् अर्थः । साध्यसाधर्म्यं साध्येन समानधर्मता, तस्मात्साध्यसाधर्म्याच्च[4]द्धर्मभावी भवति । तस्य धर्मस्तद्धर्मः तस्य साध्यस्य धर्मिणो यो धर्मः स साध्यधर्मः । स यस्मिन्दृष्टान्ते भवति स

---

[1] भाष्यकारीयमुदाहरणं, प्रयोगमात्रभेदात् अर्थभेदाभावाच्च अयुक्तमिति मन्वान उदाहरणान्तरमाह—उदाहरणं त्विति ।

[2] इयानेवास्मिन्सूत्रे उपलब्धो ग्रन्थः । अन्यत्सर्वं त्रुटितम् ।

[3] हेतौ साध्यस्य व्याप्तिं गृहीत्वेत्यर्थः । ल्यब्लोपे पञ्चमी ।



[4] × × × × × × स यस्मिन् मा.

दृष्टान्त उदाहरणम् । यथा स्थाल्यादिद्रव्यं तदुत्पत्तिधर्मकं चानित्यं दृष्टमिति । उदाह्रियते अनेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम् । ॥ ३६ ॥

[1]तद्विपर्ययाद्विपरीतम् ॥ ३७ ॥

साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमित्यवीतहेतौ द्रष्टव्यम् । यथा नेदं निरात्मकमित्यत्र यन्निरात्मकं तत्प्राणादिमन्न भवतीति । ॥ ३७ ॥

[उपनयस्वरूपनिरूपणम्]

उदाहरणापेक्षः तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥

उदाहरणापेक्ष उदाहरणतन्त्रः । उदाहरणे हि साध्यसाधनयुक्ते दृष्टे इत्यतः उदाहरणापेक्षः । तथा च शब्द उत्पत्तिधर्मक इति साध्यस्य धर्मस्योत्पत्तिधर्मकत्वमुपसंह्रियते । अस्ति च शब्दे कृतकत्वमिति, स यदा साध्यसाधर्म्योदाहरणं प्रत्येति तदा तथेति । यदा वैधर्म्योदाहरणं तदा न तथेति उपनयः । यथा [2]यन्निरात्मकं तदप्राणादिमत्, न तज्जीवच्छरीरम् × × × × × । ॥ ३८ ॥

---

[1] तद्विपर्ययात् । साध्यसाधनव्यतिरेकव्याप्तिदर्शनात् । साध्यसाधनाभावसामानाधिकरण्यबोधकदृष्टान्तशाली न्यायावयवो व्यतिरेक्युदाहरणम् ।

[2] यन्निरा × × × × तदप्रा × × × मत्वा × × × × × × दिति मा.

[निगमनलक्षणनिरूपणम्]

हेत्वपदेशात्प्रतिज्ञायाः [1]पुनर्वचनं निगमनम् ॥ ३९ ॥

साधर्म्योदाहरणोपनये तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति। वैधर्म्योदाहरणोपनये तु तस्मादप्राणादिमत्त्वाभावान्न निरात्मकं जीवच्छरीरमिति। निगम्यन्तेऽनेन प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्येकत्रेति निगमनम्। निगम्यन्ते–समर्थ्यन्ते सम्बध्यन्ते इत्यर्थः। ॥ ३९ ॥

[इति न्यायप्रकरणम्]

[तर्कस्वरूपकथनम्]

अथ तर्कः —

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ४० ॥

अस्यार्थः पूर्ववत्। अविज्ञाततत्त्वेऽर्थे इति। [2]यथा सोऽर्थो भवति, सोऽस्य तथा भावस्तत्त्वम्। तदविज्ञातं यस्यार्थस्य तस्मिन्नविज्ञाततत्त्वेऽर्थे। षष्ठीस्थाने एषां सप्तमी द्रष्टव्या। [3]अविज्ञाततत्त्वार्थस्य

---

[1] पुनर्वचनमिति। सिद्धनिर्देशो निगमनम्। साध्यनिर्देशः प्रतिज्ञा। यच्च प्रतिज्ञायां साध्यं तदेव निगमने सिद्धमित्यभिप्रेत्य फलोपधानविधया वा समानविषयकत्वेन वेयमुक्तिः —'निगमनं प्रतिज्ञेति।

[2] अविज्ञातं तत्त्वं येनेति वा, अविज्ञातं तत्त्वं यस्येति वा समासद्वैविध्यसम्भवेन को वा समास इत्यतआह—यथेति। तथा च षष्ठीसमास एवायम्, न तृतीयेत्युक्तं भवति।



[3] अविज्ञातं तत्त्वं, वस्तुनो याथार्थ्य–तद्वत्ति तत्प्रकारकतेति यावत्।

तत्त्वज्ञानार्थमिति सम्बन्धात् । [1]कारणोपपत्तितः—प्रमाणोपपत्तितः । उपपत्तिः सम्भवः । भवत्वेतस्मिन्नर्थे प्रमाणमिति भवेदयमर्थः इति । उदाहरणं—योऽयं ज्ञाता ज्ञातव्यमर्थं जानाति तं तत्त्वतो जानीयामिति । किमयमुत्पत्तिधर्मकोऽथानुत्पत्तिधर्मक इति । अत्र प्रमाणधर्मकतया [2]अनुत्पत्तिधर्मकेणानेन भवितव्यमिति यः ऊहः स तर्कः ।

ननु [2]एतत्तत्त्वतो ज्ञानमेव, किमुच्यते, तत्त्वज्ञानार्थमिति । नेदं तत्त्वज्ञानमनवधारणात्मकत्वात् । ॥ ४० ॥

[निर्णयलक्षणम्]

एतस्मिंश्च तर्कविषये—

विमृश्य पक्षप्रतिपक्षाभ्याम् अर्थावधारणं निर्णयः ॥ ४१ ॥

[3]सम्बन्धोऽर्थश्च पूर्ववत् । विमृश्य—विमर्शनं कृत्वा । पक्षश्च प्रतिपक्षाश्च पक्षप्रतिपक्षाभ्याम् । पक्षशब्देन पक्षविषयं साधनमुच्यते ।

---

[1] कारणं चोपपत्तिश्च कारणोपपत्ती ताभ्यामित्यर्थः । अनेन सत्येव सामान्यज्ञाने तर्कावकाशो नान्यथेत्युक्तं भवति । अत्र अविज्ञाततत्त्वेऽर्थे ऊहस्तर्क इत्येव यदि लक्षणत्वेनाभिमन्यते, तदा संशयजिज्ञासयोरपि तथात्वेनातिव्याप्तिः । अतः कारणोपपत्तित इति । तयोरतथात्वान्नातिव्याप्तिः ।

[2] नु × × × × × × कि मा.

[3] सम्बन्धः — उद्देशक्रमेण तर्कानन्तर्यलक्षणः । अर्थः — प्रयोजनम् । समानासमानजातीयव्यवच्छेदः इत्यर्थः ।

प्रतिपक्षशब्देन प्रतिपक्षविषयस्य साधनस्योपलम्भः। अमूभ्यां साधनोपलम्भाभ्यां यदर्थावधारणं स निर्णयः, प्रमाणानां फलमिति मन्तव्यम्। ॥ ४१ ॥

[इति न्यायोत्तराङ्गलक्षणप्रकरणम्]

इति न्यायसूत्रविवरणे प्रथमाध्यायस्य प्रथमाह्निकम्

## अथ न्यायसूत्रविवरणे प्रथमेऽध्याये द्वितीयमाह्निकम्

[वादलक्षण निरूपणम्]

[1]अथ तिस्रः कथा भवन्ति, वादो जल्पो वितण्डा चेति। तत्र गुर्वादिभ्यः सह वादः। विजिगीषुणा जल्पवितण्डे भवतः। तत्र यथोद्देशं लक्षणापदेश इति ज्ञापितं भवति। तत्र वादस्य लक्षणमुच्यते—

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः [2]पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥**

एकाधिकर[3]णस्थौ [4]विरुद्धौ धर्मौ पक्षप्रति[5]पक्षौ, प्रत्यनीकभावात्। यथाऽस्त्यात्मा नास्त्यात्मेति। नानाधिकरणस्थौ न विरुद्धौ पक्षप्रतिपक्षौ। परिग्रहोऽभ्युपगमव्यवस्था। सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः।

प्रमाणतर्कसाधनोपालम्भ इति। प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् विचारे भवतीति। पक्षप्रतिपक्षपरिग्रहस्य मार्गत्रयेऽपि समानत्वाद्विशेषणं भवति। तर्कोऽपि प्रमाणानुग्राहकत्वात्प्रमाणसहितो वादे प्रविष्टः। न तु केवलं प्रमाणानामेकार्थव्यवस्थापकत्वात्।

---

[1] प्रथमाह्निके सपरिकरो न्यायो निरूपितः। इदानीं वादो निरूप्यते। अत्र प्रकरणचतुष्टयं—कथाप्रकरणं, हेत्वाभासप्रकरणं, छलप्रकरणं, दोषलक्षणप्रकरणं चेति। कथाविशेषो वादः। तथा च त्रिभिस्सूत्रैरेकं प्रकरणमित्यभिप्रेत्याह—अथ तिस्र इति।

[2] पक्षप्रतिपक्षपरिग्रह इति—पक्षाय तत्त्वविनिर्णयाय प्रतिपक्षौ वादिप्रतिवादिप्रयुक्तस्वस्वपक्षसाधकयुक्तिजाती, तयोः परिग्रह इत्यर्थः।

अथैतौ साधनोपालम्भौ किंविषयौ ? पक्षप्रतिपक्षविषयौ । पक्षविषयं साधनम् । प्रतिपक्षविषय उपालम्भः ।

अथ प्रमाणतर्कसाधनोपालम्भ इत्यनेन जल्पवितण्डाभ्यां कथं वादो विशिष्यते ? वादस्य नित्यमेव प्रमाणतर्कसाधनोपालम्भात्मकत्वात् । जल्पवितण्डयोः छलजातिनिग्रहस्थानोपालम्भात्मकत्वस्य वक्ष्यमाणत्वात् । जल्पे निग्रहस्थानविनियोगत्वादेतत्प्रतिषेधः । सिद्धान्तमभ्युपेत्याऽनियमात् यथाप्रसङ्गोऽपसिद्धान्त इत्येवंलक्षणापसिद्धान्तस्य निग्रहस्थानस्यावरोधार्थं सिद्धान्ताविरुद्धमिति वचनम् । वादे पञ्चावयवोपपन्न इति हीनमन्यतमेनाप्यवयवेन न्यूनम् हेतूदाहरणाधिकमधिकम् इति चैतयोरभ्यनुज्ञानार्थमिति । ॥ १ ॥

[जल्पस्वरूपविवेचनम्]

[1]यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भः जल्पः ॥ २ ॥

अत्र यथोक्तोपपन्न इति प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षनिग्रह इत्येतावदादिश्यते ।

---

तत्त्वनिर्णयेत्युक्तिः जल्पव्यावृत्यर्था ।

[3] णस्थ— मा.

[4] विरुद्धधर्म— मा.

[5] प्रतिपक्ष— मा.

[1] यथोक्तेति । यथोक्तेन वादलक्षणेनोपपन्नः प्रमाणैस्तर्केण च साधनमुपालंभश्चेत्यर्थः ।

ननु सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति पदद्वयम्। एतस्य पदद्वयस्य [1][नियमार्थत्वान्नातिदेश्यत्वे इति, न, यदत्र सम्बध्यते तदतिदिश्यते। सम्बध्यते च प्रमाणतर्कसाधनोपालम्भ इत्येतत् अतिदिश्यते। तथा च यथोक्तोपपन्न इति लक्षणमात्रस्यातिदेशः। एवं च सामर्थ्यसद्भावादतिदिश्यते इति न नियमार्थे पदे] नियन्तव्यस्याभावाच्च। ननु छलजातिनिग्रहस्थानैः कस्यचित्साधनमुपालम्भो वा न भवति, अयुक्तोत्तरत्वात्। अतः किमर्थं छलजातिनिग्रहस्थानसाधनोपालम्भोपादानमिति ? साधनविघातार्थम्। छलजातिनिग्रहस्थानेषु पुनस्साधयितुं सम्यक्दूषयितुं वक्ष्यते। अतो नैतदभिधीयते छलजातिनिग्रहस्थानानि साधनमङ्गानि वेति। अनाधितसाधनोपादाने परेणाकुलितबुद्धिः छलादीनि प्रयुङ्क्ते कदाचिच्छलादिभिराकुलीकृतस्य पराजयोऽपि स्यात्। न पुनरेतानि तत्त्वबुभुत्सुना वक्तव्यानि, किन्तु विजिगीषुणेति अतोऽयं पक्षप्रतिपक्षनिग्रहात् छलजातिनिग्रहस्थानप्रयोगाप्रयोगाभ्यां भिद्यमानो वादो जल्पो वितण्डा च भवति। ॥ २ ॥

[वितण्डालक्षणाभिधानम्]

**स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥**

प्रतिपक्षस्थापनाहीनो द्वितीयपक्षस्थापनाहीन इति यावत्[2]। वैतण्डिको हि परपक्षप्रतिक्षेपेण प्रवर्तत इति। ॥ ३ ॥

[इति कथालक्षणप्रकरणम्]

---

[1] [　] एतच्चिह्नान्तर्गतस्य मूलकोशे त्रुटितत्वात् यथावार्तिकमायोजि।

[2] सावधारणमिदम्। प्रतिपक्षनिराकरणैकरतः स्वीयपक्षरहित इत्यर्थः।

[हेत्वाभासनिरूपणम्]

## सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसमा[1]तीतकाला हेत्वाभासाः ॥ ४ ॥

[2]हेतुलक्षणाभावादहेतवो हेत्वाभासाः। इमे तु सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम—अतीतकाला हेत्वाभासाः। कः पुनरस्य सूत्रस्यार्थः। विभागोद्देशः। ॥ ४ ॥

[सव्यभिचारादिपञ्चहेत्वाभासलक्षणनिरूपणम्]

## अनैकान्तिकस्सव्यभिचारः ॥ ५ ॥

एकस्मिन्नन्ते निश्चये नियतः ऐकान्तिकः। तद्विपरीतोऽनैकान्तिकः। व्यभिचारः साध्यतज्जातीययो[3]रन्यत्र वृत्तित्वम्। तेन सह वर्तत इति सव्यभिचारः। अस्योदाहरणं अस्पर्शत्वान्नित्यः शब्दः, स्पर्शवान् कुम्भो ह्यनित्यो दृष्टः। न च तथा स्पर्शवान्शब्दः, तस्मान्नित्यः

---

[1] कालातीत इति प्रचलितः मुद्रितः पाठः।

[2] हेतुलक्षणाभावादिति। प्रतिबन्धयुतो हेतुः। प्रतिबन्धश्च हेतोः साध्येन साकम्। तदभावो नाम प्रतिबन्धाभाव इत्यर्थः। तथा च यत्र हेतुसाध्ययोर्न प्रतिबन्धः, तत्रत्यो हेतुः हेतुवदाभासते, न तु सद्धेतुवत्प्रतिबन्धयुतः। तादृशो हेत्वाभास इत्यर्थः।

[3] अन्यत्र वृत्तित्वमिति। साध्यतदभावोभयसंबद्धो हेतुरन्यत्रवृत्तिः। विरुद्धस्य तथात्वादवैलक्षण्याशङ्कायामुक्तं – साध्यतज्जातीयेति।

शब्दः, अत्र दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च द्वाविमौ धर्मौ साध्यसाधनभूतौ न गृह्येते। कथं? स्पर्शवांश्च परमाणुर्नित्यश्चेति। अस्पर्शो ह्यात्मादिर्नित्यो दृष्टः इति। साधर्म्यदृष्टान्तेप्यस्पर्शत्वहेतोर्व्यभिचारित्वम्—अस्पर्शा बुद्धिरनित्या चेति। ॥ ५ ॥

[विरुद्धलक्षणम्]

सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥

कोऽस्य सूत्रस्यार्थः, [1]अभ्युपगतार्थविरोधी विरुद्ध इति। उदाहरणं —'तदेतत्त्रैलोक्यं व्यक्तेरपैति' नित्यत्वप्रतिषेधादपेतमप्यस्ति विनाश-

---

साध्येन तज्जातीयेन तदभाववतीति वार्थः। तथा च साध्याभावेनापि साकं यस्य हेतोः सम्बन्धः भवेत् स सव्यभिचार इति बोध्यम्।

[1] अभ्युपगतार्थविरोधीति। अभ्युपगतो योऽर्थ तद्विरोधीत्यर्थः। यः सिद्धान्तत्वेन कस्यचनाभिमतः तद्विरुद्धः तद्विरुद्धाभिप्रायवर्णनं विरोध इति भाष्याभिमतोऽर्थः। नव्यास्तु साध्याभावव्याप्तो हेतुर्विरुद्ध इति तल्लक्षणं निरूपितवन्तः। अतः सङ्ग्रहे विरुद्धलक्षणदृष्टान्तत्वेनेदमभ्यधायि— 'शब्दो नित्यः कृतकत्वादिति'। साध्य'मभ्युपेत्य' उद्दिश्य तद्विरोधी, तदभावप्रतिबद्धो यो हेतुस्स तादृशः इति व्याख्यातमपि वृत्तिकृता। न चैवं सति सत्प्रतिपक्षाविशेष इति वाच्यम्। साध्याभावसाधकत्वांशाविशेषेऽपि तत्र हेत्वन्तरस्य विद्यमानत्वेन वैशेष्यात्।

प्रतिषेधात् इति। अत्र [1]पूर्वहेतुनाभ्युपगतमर्थं उत्तरहेतुर्विरुणद्धि। उत्तरेण वा पूर्वो विरुध्यते। ॥ ६ ॥

[प्रकरणसमलक्षणम्]

यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥

विमर्शाधिष्ठानौ पक्षप्रतिपक्षावनवसितौ प्रकरणम्। तस्य चिन्ता विमर्शात्प्रभृति प्राङ्निर्णयाद्यत्समीक्षणम्। स हेतुर्निर्णयार्थं प्रयुक्तः उभयपक्षसाम्यात् प्रकरणसमः प्रकरणमनतिक्रम्य वर्तमानः। उदाहरणम्—[2]अनित्यः शब्दः नित्यधर्मानुपलब्धेरिति। यथा शब्दे नित्यधर्मो नोपलभ्यते, एवमनित्यधर्मोऽपीति सोऽयमुभयपक्षविशेषानुपलब्धिः। प्रकरणचिन्तां प्रयोजयति नान्यतरस्य निर्णयाय कल्पत इति प्रकरणसमो हेत्वाभासः। ॥ ७ ॥

---

[1] विनाशप्रतिषेधात्प्राप्तं नित्यत्वं, नित्यत्वप्रतिषेधादित्यनेन पुनःप्रतिषेधे व्याहतिः। विरुद्धार्थप्रतिपादकत्वं हेतोरिति ज्ञेयम्। एवमेव नित्यत्वप्रतिषेधादित्यनेन प्रतिषिद्धं नित्यत्वं, विनाशप्रतिषेधादित्यनेन पुनरङ्गीकारे विरुद्धार्थप्रतिपादकयोर्हेत्वोर्विरोध इति ज्ञेयम्।

[2] शब्दः अनित्यः नित्यधर्मानुपलब्धेः इत्यनुमाने प्रयुक्ते, शब्दः नित्यः अनित्यधर्मानुपलब्धेरित्यपि प्रयोक्तुं शक्यत्वेन उभयपक्षविशेषानुपलब्ध्या निर्णायकाभावेन च प्रकरणसमत्वं हेतोर्बोध्यम्।

[साध्यसमलक्षणम्]

साध्याविशिष्टः साध्यत्वात्साध्यसमः ॥ ८ ॥

साध्येनाविशिष्टो यः साधनधर्मः, साध्यवत्प्रज्ञापयितव्यः स [1]साध्यसमः । स एव चासिद्ध इत्युच्यते । उदाहृतिः— [2]द्रव्यं छाया गतिमत्त्वादिति । अत्र च यथा द्रव्यत्वं छायायाः साध्यं तथैव गतिमत्त्वमपीति । [3]गतिमत्त्वं देशाद्देशान्तरदर्शनादिति चेत्—न, देशान्तरदर्शनस्या[4]न्यथासिद्धत्वात् । कथमन्यथा ? आवरणसन्तानादसन्निधिसन्तानस्तेजस इति यथायथं आवरके द्रव्येऽपसर्पति गच्छति, तेजसोऽसन्निधिविशिष्टं द्रव्यं यदुपलभ्यते तत्तु छायेत्युच्यते इति ॥ ८ ॥

---

[1] साध्यसम इति । साध्यसदृशः । साध्यवत्प्रसाध्य एव न सिद्धः [असिद्ध] इति यावत् । तदाह—असिद्ध इति ।

[2] द्रव्यं छायेति । छाया द्रव्यमित्यन्वयः । तथा च द्रव्यभावः साध्यः छाया पक्ष इति ज्ञेयम् । छायाया द्रव्यत्वे हेतुः गतिमत्त्वमिति ।

[3] असिद्धो हेतुरित्याह—गतिमत्त्वमिति । देशान्तरे दर्शनात् गतिमत्त्वं छायायां दृष्टमिति चेत् न आश्रयासिद्धेः । सत्येव द्रव्यत्वे छायाया देशान्तरदर्शनं स्यात् । द्रव्यभावस्त्वसिद्ध इत्यर्थः ।

[4] अन्यथासिद्धं चैतदित्याह—अन्यथासिद्धत्वादिति । परिशुद्ध्यां चोदयनाचार्यः पक्षासिद्धिर्ह्याश्रयासिद्धिः, हेत्वसिद्ध्या स्वरूपासिद्धिः, व्याप्त्यभावो व्याप्यत्वासिद्धिरिति निगदितवान् ।

[कालातीतलक्षणम्]

कालात्ययापदिष्टः कालातीतः ॥ ९ ॥

यस्यापदिश्यमानस्य कालात्ययेनैकदेशो युज्यते स एकदेशात्ययात् कालात्ययापदिष्टः कालातीतः । उदाहरणं—नित्यः शब्दः संयोगव्यङ्ग्यत्वादिति । उपलब्धिकाले संयोगो नास्ति, सोऽयं संयोगो हेतुविशेषणत्वेनोपात्तः उपलब्धिकालमत्येति इति हेतुः [1]कालातीत उच्यते । ॥ ९ ॥

[इति हेत्वाभासलक्षणप्रकरणम्]

[छललक्षणम्]

अथ छलमाह—

[2]वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥

सामान्यशब्दस्य विशेषानेकसम्बन्धित्वे स[3]ति अविवक्षितान्यार्थाध्यारोपणेन वचनविघातो यः क्रियते, तच्छलमिति वेदितव्यम् ॥ १० ॥

---

[1] नव्यास्तु—"वह्निरनुष्णः द्रव्यत्वा"दित्युक्ते प्रत्यक्षादिविरोधेन, अनुष्णत्वाभाववति उष्णत्वाधिकरणे वह्नौ । अनौष्ण्यसाधकस्य द्रव्यत्वस्य, प्रत्यक्षादिमानविरुद्धत्वेन कालात्ययात्कालातीततामुपवर्णयन्ति ।

[2] पूर्वं हेत्वाभासा यथाक्रमं निरूपिताः । इतः परं उद्देश्यानुरोधेन छललक्षणमभिधीयते—वचनविघातेति ।

[3] सिति — पा.

[वाक्छलादिभेदेन छले त्रैविध्यनिरूपणम् ]

तत्त्रिविधं – वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥

[वाक्छललक्षणम् ]

तेषां मध्ये

अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ १२ ॥

यथा नवकम्बलोऽयं माणवकः इति प्रयोगः । अत्र नवः कम्बलोऽस्येति वक्तुरभिप्रायः । तत्र छलवाद्याह—[1]कुतोऽस्य नवकम्बला इति । तदिदं सामान्यशब्दे[2]वाचि छलं वाक्छलमिति । ॥ १२ ॥

[सामान्यच्छललक्षणम् ]

सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना
सामान्यच्छलम् ॥ १३ ॥

[3]सामान्यस्य विवक्षितार्थातिक्रमोऽतिसामान्यम् । उदाहरणं—

---

[1] अयमाशयः—यथा वक्तुरभिमतोऽर्थः, विद्यते तद्विपरीतार्थ-कल्पनारूपा युक्तिरेव वाक्छलमित्यर्थः । यथा नेपालादागतो देवदत्त नवकम्बलवानिति प्रयुक्ते नवकम्बलो नाम नूतनकम्बलेत्यभिप्रायसत्त्वेऽपि वक्तुः, नवसंख्याकार्थविकल्पनेन स्वरूपासिद्धिकथनं छलम् ।

[2] "वाचकान्तरं निमित्तछलाभावात् छलमार्गनिमित्तत्वादित्युच्यते" इति वाक्यं मूलकोशे विद्यमानं प्रकृतानुपयोगितया परित्यक्तम् ।

[3] सामान्यं　　मा.

विद्याचरणसम्पन्नो ब्राह्मण इति। छलवादी ब्राह्मण्यं विद्याचरणसम्पदो हेतुरित्युक्तमिति कृत्वा प्रत्यवतिष्ठते। यदि ब्राह्मणे विद्याचरणसम्पद् भवति, व्रात्येऽपि सम्भवेत्, व्रात्योऽपि ब्राह्मणो भवितुमर्हति। अनेन वचनेन सम्भवति ब्राह्मणे विद्याचरणसम्पदित्यस्य [1]विघातो असम्भवार्थकल्पनया क्रियते। तदिदं ब्राह्मणत्वसामान्यनिमित्तत्वात्सामान्यछलम् ॥ १३ ॥

[उपचारच्छललक्षणम्]

धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥

धर्मविकल्पशब्देनाभिधानधर्मो द्वेधाऽभिधीयते [2]प्रधानं भाक्तश्च। यथा मञ्चाः क्रोशन्तीति। काष्ठसंघातेषु प्रधानो मञ्चशब्दः क्रोशनक्रियायास्तत्रासम्भवमीक्षित्वा स्थानिषु पुरुषेषु प्रयुज्यमानो भाक्तः। य एकस्मिन्प्रयोगे प्रधानबुद्ध्या प्रतिषेधः क्रियते, न मञ्चाः क्रोशन्तीति तदुपचारप्रयोगनिमित्तत्वादुपचारच्छलम् ॥ १४ ॥

---

[1] विहतो मा

[2] **प्रधानमिति।** व्यवहारः शब्दाभिलपनरूपः द्विविधः, प्रधानाप्रधानभेदेन। यत्र च तद्योग्यताविरहिते वस्तुनि तदभिधीयते तदा, व्यवहारः प्रधानवत्प्रतीयमानोऽपि भाक्तो भवति तत्रोदाहरणमाह— **यथा मञ्चा इति।** मञ्चाः क्रोशन्तीत्यत्र क्रोशनकर्तृत्वं काष्ठसंघाते बाधितं प्रधाने पुरुषे तं व्यवस्थापयति। यत्र च प्रधानबुद्ध्या प्रतिषेधः क्रियते, न मञ्चाः क्रोशन्तीति तदुपचारप्रयोगनिमित्तत्वादुपचारच्छलम्।

[वाक्छलोपचारच्छलयोरविशेषशङ्का]

वाक्छलमेवोपचारच्छलम् तदविशेषात् ॥ १५ ॥

एकत्वम्, [1]अनयोरविशेषात् । [2]कोऽविशेषः ? इहाप्यर्थान्तर[3]कल्पना तथा तत्रापीति तदविशेषात् ॥ १५ ॥

[वाक्छलोपचारच्छलयोर्विशेषसमर्थनम्]

न, तदर्थान्तरभावात् ॥ १६ ॥

अविशेषादित्यस्य हेतोः अनेन सूत्रेण [4]सिद्धतामुद्भावयति । कथमसिद्धिः ? एकत्र वस्तुसद्भावः प्रतिषिध्यते नैव क्रोशन्ति मञ्चा इति । एकत्र वस्त्वभ्यनुज्ञाय कम्बलयोगमभ्युपगम्य कम्बलस्यानेकताधर्मः प्रति-

---

[1] अनयोरविशेषादिति । वाक्छले नवीनार्थो नवशब्दः संख्यार्थत्वेन कल्पितः, उपचारच्छले इहापि मञ्चस्थपुरुषवाची मञ्चशब्दः काष्ठसंघातार्थ एव प्रकल्पित इत्युभयत्रापि अर्थसामान्यादुभयमप्येकमित्यर्थः ।

[2] को विशेषः — मा.

[3] कल्पना इत्यतःपरं "तेषामचत्वादिति" वाक्यं सन्दर्भविरुद्धत्वात्परित्यक्तम् ।

[4] तन्निराचिकीर्षुरुक्तहेतावसिद्धिमाह— असिद्धतां इति । अत्रेदं तत्त्वम्—उपचारच्छले वस्तुसद्भावः क्रोशनकर्तृत्वरूपः मञ्चे प्रतिषिध्यते । वाक्छले पुनरभ्युपगम्य वस्तुसद्भावं नवकम्बलं, केवलं नवत्वसंख्या प्रतिषिध्यते । ततश्चोपचारच्छले वस्तुसद्भावप्रतिषेधेन धर्मिनिषेधात्, वाक्छले धर्मिणमङ्गीकृत्य, केवलं धर्मनिषेधः क्रियत इति अस्त्यत्र भेदः ।

षिध्यन्त इति । [1]एकत्र धर्मः प्रतिषिध्यते, [2]एकत्र धर्मी, सोऽयमतिमहान्विशेषः ॥ १६ ॥

[3]अथ मन्यसे किं नोऽनेन विशेषेण इहाप्यर्थान्तरकल्पना तत्रापीति—

**अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥ १७ ॥**

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते । यथा चायं हेतुः त्रित्वं प्रतिषेधति तथा द्वित्वमपि अभ्यनुज्ञातं प्रतिषेधति । विद्यते हि किञ्चित्साधर्म्यं द्वयोरपीति ।

अथ द्वित्वं किञ्चित्साधर्म्यान्न निवर्तते तथा त्रित्वमपि न निवर्त्स्यतीति ॥ १७ ॥

[इति छललक्षणाभिधानम्]

[जातिलक्षणाभिधानम्]

अथ जातयः

**[4]साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥**

संस्थापनायां हेतोस्सत्यां साधर्म्येण वैधर्म्येण वा प्रतीपमवस्थानं प्रतिपक्षवदिति ॥ १८ ॥

---

[1] यत्र — मा.

[2] यत्र — मा.

[3] कथं — मा.

[4] साधर्म्यवैधर्म्याभ्यां व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यामित्यर्थः । प्रत्यवस्थानं, अनिष्टप्रसञ्जनेन दूषणं जातिरित्यर्थः ।

[1]प्रत्यनीकवत् जायमानेऽर्थः जातिः

[निग्रहस्थाननिरूपणम्]

विप्रतिपत्तिरप्रतिपत्तिश्चेति निग्रहस्थानम् ॥ १९ ॥

अन्यथाऽभिहितस्य स्थितस्य वान्यथाप्रतिपत्तिर्विप्रतिपत्तिः। तथा विप्रतिपद्यमानः पराजयं प्राप्नोति। निग्रहस्थानं खलु पराजयप्राप्तिः अप्रतिपत्तिस्त्वारम्भविषयेऽनारम्भः। परेण स्थापितं वा न प्रतिषेधति। प्रतिषिद्धं वा नोद्धरति। असमासाच्च नैते एव निग्रहस्थाने इति ॥ १९ ॥

किं पुनर्दृष्टान्तवज्जातेर्निग्रहस्थानस्य चाभेदः आहोस्वित् सिद्धान्तवद्भेद इत्यत आह—

तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाद्धेतोः जातिबहुत्वम्। तयोश्च विप्रतिपत्त्यप्रतिपत्त्योः [2]विकल्पान्निग्रहस्थानबहुत्वमिति। त एते प्रमाणादयः पदार्थाः उद्दिष्टा लक्षिताश्च। अतः परं यथोद्देशं यथालक्षणं च [3]परीक्षिष्यन्ते इति त्रिविधास्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति।

तन्त्रप्रतिज्ञा संसारस्तन्निवृत्तिश्च संविदा।
उद्देशो लक्षणं चैव तत्त्वानामिह कीर्तितम् ॥

[इति पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम्।]

इति न्यायसूत्रविवरणे प्रथमोऽध्यायः

---

[1] जातिशब्दस्यास्मिन्नर्थे समन्वयप्रकारमाह—प्रत्यनीकवदिति।

[2] विकल्पवन्नि मा.

[3] परीक्ष्यन्ते— मा.

## अथ न्यायसूत्रविवरणे द्वितीयेऽध्याये प्रथममाह्निकम्

[संशयपरीक्षाप्रकरणम्]

त्रिविधा चास्य [1]शास्त्रस्य प्रवृत्तिः, उद्देशो लक्षणं परीक्षा चेति कथितम्। तत्रोद्देशलक्षणे व्याख्याते पूर्वाध्याये। इदानीं परीक्षा वर्तिष्यते। तत्र यथोद्देशः, तथा लक्षणं तथा परीक्षेति पूर्वमुद्दिष्टानि लक्षितानि च।

प्रमाणानि प्रमेयाणि च विलंघ्य संशयः पूर्वं परीक्ष्यते। किमर्थं क्रमभेदः क्रियते? परीक्षाङ्गत्वात्संशयस्य। सोऽयं संशयः समानधर्मोपपत्तेः इत्येवमादिर्यस्तस्याक्षेपः।

**समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसा[2]याद्वा न संशयः ॥ १ ॥**

[3]समानधर्माध्यवसायः संशयस्य न कारणं भवति। [4]अन्यतरधर्माध्यवसायाच्च न संशयो भवति। अतोऽन्यतरावधारणमेवैतदिति ॥ १ ॥

---

[1] शाकस्य— मूलकोशे

[2] याश

[3] **समानेति।** समानानेकेति सूत्रं यथाश्रुतं, संशयकारणतां त्रयाणां प्रतिषेधति। समानधर्माध्यवसायादनेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न भवति संशय इत्यर्थः। अत्र च भाष्यवाक्यं समानस्य धर्मस्याध्यवसायात्संशयो न धर्ममात्रादिति सूत्रकारविरुद्धाभिप्रायोपवर्णनपरमिव प्रतिभाति। अस्य च तात्पर्यं वार्तिकादौ प्रत्यपादि—उक्तकारणतात्रय-

विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥ २ ॥

न संशय इति वर्तते । [1]विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च न संशयः । [2]न विप्रतिपत्तिमात्रात् अव्यवस्थामात्राद्वेति सूत्रार्थः ॥ २ ॥

विप्रतिपत्तौ च सम्प्रतिपत्तेः ॥ ३ ॥

[3]न विप्रतिपत्तिरस्तीति, न संशय इति सूत्रार्थः ॥ ३ ॥

---

समववधाने न संशयो, धर्ममात्रात्—अनध्यवसितधर्ममात्रात्संशय इत्यर्थः । धर्माध्यवसायो हि संशयनिरासहेतुरिति सिद्ध एव । तथा च भाष्यमपि समाहितं वेदितव्यम् ।

[4] अन्यतरधर्माध्यवसायाच्चेति । अनेकधर्माध्यवसायात्संशयो नेति चार्थः ।

[1] विप्रतिपत्तीति । विप्रतिपत्तिश्चाव्यवस्था च विप्रतिपत्त्यव्यवस्थे । विप्रतिपत्त्यव्यवस्थयोरध्यवसायः, तस्मादित्यर्थः । विप्रतिपत्त्यध्यवसायः अव्यवस्थाद्ध्याध्यवसायश्च न संशयहेतू इत्यर्थः ।

[2] सूत्रस्य साकाङ्क्षत्वेनाकाङ्क्षां पूरयति—नेति । नैभिः संशय इत्यर्थः ।

[3] अयमाशयः—विप्रतिपत्तेः विरुद्धज्ञानद्वयात्मकस्य निश्चयरूपत्वेन सम्प्रतिपत्तेरेव न संशयः । अस्त्यात्मेति एकस्य ज्ञानम् । नास्त्यात्मेति चापरस्य । एवञ्चात्र निश्चयात्मकमेव ज्ञानद्वयम् । तथा सति यदि संशयस्तदा सर्वत्र संशयः स्यात् ।

अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥ ४ ॥

अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया नाव्यवस्था विद्यत इति सूत्रार्थः ॥ ४ ॥

तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ॥ ५ ॥

[1]समानधर्मादीनां धर्माणां सातत्यादत्यन्तसंशयः स्यादिति सूत्रार्थः ॥ ५ ॥

अस्योत्तरमाह—

यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥

अयं प्रतिपक्षस्य सङ्क्षेपेणोद्धारः। नायं समानधर्मादिभ्य एव संशयः, किन्तु तद्विषयाध्यवसायात् उपलब्ध्यनुपलब्ध्यव्यवस्थाने सति [2]विशेषस्मृतिसहितात्।

---

[1] **समानधर्मेति।** समानधर्ममात्रस्य संशयहेतुत्वे स्थाणुरयं पुरुषो वेति संशयसमनन्तरं स्थाणुरयमिति वा पुरुषोऽयमिति वा निश्चयज्ञानस्य जननेऽपि तस्य सामान्यज्ञानाविरोधित्वेन सर्वत्रानिवृत्तिप्रसङ्गः।

[2] **विशेषस्मृतिसहितादिति।** पूर्वोक्तं संशयकारणतासामग्री-सामान्यं प्रतिपेद्धुं नूनमभिप्रायविशेषं व्यञ्जयति—विशेषेति। विशेष-स्मृतिसमानाधिकरणसमानधर्मस्यैव संशयहेतुता। दूरस्थे वस्तुनि किमयं स्थाणुरथ पुरुषो वेति सन्देहे समानधर्ममूर्ध्वत्वादिकं समवलोकमानस्य विशेष-

एवं च [1]नासंशयो नात्यन्तसंशयो वा । अन्यतरधर्माध्यवसायाद्वेति न युक्तं नैकस्मात्संशय इति । न हि कदाचिदन्यतरधर्माध्यवसाये सति संशयः । अन्यतरधर्माध्यवसायस्य निर्णयहेतुत्वादिति ।

यत्पुनरेतत् विप्रतिपत्तौ च सम्प्रतिपत्तेरिति न संज्ञान्यथात्वादर्थस्यान्यथात्वम् । यस्माद्विप्रतिपत्तिशब्दार्थस्य निमित्तान्तरसन्निपाते सम्प्रतिपत्तिरिति नाम कृतं, न तावता विप्रतिपत्तिर्नास्ति, विप्रतिपत्तेस्तु तथाभावात् संशयहेतुत्वमिति ।

यत्पुनरेतत् अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया इति नाव्यवस्थास्तीति तदपि न, व्याघातात् । अव्यवस्था नास्तीति सा चाव्यवस्थात्मनि व्यवस्थितेति व्याघातः । [2][न च निमित्तान्तरसन्निपातेनार्थस्य संज्ञान्तरकरणमर्थतथाभावं बाधते, यथाभूत एवार्थः संज्ञान्तरकरणे तथाभूत एवाकरणेऽपीति ।] ॥ ६ ॥

यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७ ॥

यत्र यत्र संशयपूर्विका परीक्षा शास्त्रे कथायां वा तत्र तत्रैव संशये

---

स्मृतिमतः च तत्र सन्देहावसरः । तथा च तद्विषयाध्यवसायात् उपलब्ध्यनुपलब्ध्यव्यवस्थाने च सति विशेषस्मृतिसहितात्समानधर्मादेव संशय इत्यर्थः । तस्मादसंशयस्यात्यन्तसंशयस्य वा नावकाशः ।

[1] न संशयो—मू

[2] [ ] एतच्चिह्नान्तर्गतानि वाक्यानि यथावार्तिकमायोजिषत । [illegible] ।

परेण प्रतिषिद्धे एवं समाधिर्वाच्य इति शिष्यान्शिक्षयत्याचार्यः । [1]अतश्च सर्वपरीक्षाव्यापित्वात्प्रथमं संशयः [2]परीक्षितः ॥ ७ ॥

[प्रमाणसामान्यपरीक्षा]

[प्रत्यक्षादीनामप्रामाण्यशङ्का]

अथेदानीं प्रमाणानि परीक्ष्यन्ते । तत्र परः प्रत्यवतिष्ठते—

**प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ॥ ८ ॥**

पूर्वापरसद्भावलक्षणेषु त्रिष्वपि कालेषु न प्रत्यक्षादीन्यर्थं साधयिष्यन्तीति ॥ ८ ॥

अस्य सामान्यवचनस्यार्थविभागः—

**पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात्प्रत्यक्षोत्पत्तिः ॥ ९ ॥**

गन्धादिविषयं ज्ञानं प्रत्यक्षं प्रमाणम् । तद्यदि पूर्वं, पश्चाद्गन्धादीनां सिद्धिः । तदा इन्द्रियार्थ[3]सन्निकर्षस्तस्य कारणमिति इन्द्रियार्थसन्निकर्षो[4]त्पन्नं ज्ञानमित्यस्य व्याघातः ॥ ९ ॥

---

[1] ततश्च

[2] परीक्ष्यते

[3] सन्निवर्ष

[4] त्पन्नं मि.

अथ पश्चात्, एवं च न व्याघातः इत्यत आह—

[1]पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥ १० ॥

प्रमाणमन्तरेण प्रमेयमात्मानं न लभत इति न प्रमाणायत्ता प्रमेयसिद्धिरिति व्याघातः ॥ १० ॥

युगपत्सिद्धौ प्रत्यर्थनियतत्वात्क्रमवृत्तित्वाभावो बुद्धीनाम् ॥ ११ ॥

इन्द्रियार्थानां बुद्धीनां च सन्निपाते सति बुद्धीनां क्रमवृत्तित्वं यत् दृष्टं तन्न स्यादिति [2]व्याघातो दोषः। [3]अत्र समाधिः—उपलब्धिहेतोः उपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमात् [4]यथादर्शनं विभाग-

---

[1] इदं च पूर्वपक्षसूत्रम्। अथ पूर्वं प्रमेयं ततः प्रमाणं सेत्स्यतीत्यत्राह—पश्चादिति। अर्थस्वरूपस्य प्रमाणानधीनत्वेपि तदीयप्रमेयत्वं तु तदधीनमेव। तदपि चेत्प्रमाणात्पूर्वं, न प्रमाणयोगनिबन्धनं स्यादित्यर्थः।

[2] व्याघात इति। प्रमाणप्रमेययोर्युगपत्सिद्धावभ्युपेतायां, ज्ञानसामान्यस्य युगपदनुत्पत्तेः सूत्रकारेण युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्यादौ साधितत्वेन युगपत्सिद्ध्यभ्युपगमे व्याघातदोष इत्यर्थः। तस्मात्प्रमाणप्रमेययोस्त्रिषये पक्षत्रयमप्यनुपपन्नमिति न कथञ्चिदपि प्रमाणसिद्धिरिति पूर्वपक्ष्याशयः।

[3] अस्य समाधानमाह—समाधिरित्यादिग्रन्थेन।

[4] यथादर्शनं—यथानुभवम्।

वचनम् । क्वचि[1]दुपलब्धिहेतुः पूर्वम् । पश्चादु[2]पलब्धिविषयः । यथादित्यस्य प्रकाशः उत्पद्यमानानाम् । क्वचित्पूर्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुः । यथावस्थितानां प्रदीपः । क्वचिदुप[3]लब्धिहेतु-विषयौ [4]सह भवतः । यथा धूमेनाग्निग्रहणमिति । उपलब्धिहेतुः प्रमाणम् । उपलब्धिविषयः प्रमेयम् । एवं प्रमाणप्रमेययोः पूर्वापर-सद्भावानियमाद्यथाऽर्थो दृश्यते तथा विभज्य वक्तव्य इति । तत्रैकान्तेन प्रतिषेधानुपपत्तिः समाख्याहेतोस्त्रैकाल्ययोगाच्चाप्रतिषेधः, प्रमाणं प्रमेयमिति चास्याः समाख्याया निमित्तं त्रिकालयोगि, प्रमास्यते प्रमीयते [5]प्रामायि [6]वानेनेति प्रमाणम् । प्रमास्यते प्रमीयते प्रामायि वेति च प्रमेयम् । एवञ्च सति प्रमास्यतेऽयमर्थः, भविष्यत्यस्मिन्हेतुत उपलब्धेरिति प्रमेयमिद-मिति सिद्ध्यति ॥ ११ ॥

---

[1] उपलब्धिहेतुः—प्रमाकरणम् ।

[2] उपलब्धिविषयः—प्रमेयम् । अयमाशयः—यथानुभवं हि प्रक्रिया कल्प्या । न प्रक्रियानुगुण्येन अनुभवोन्नयनं शक्यते । अनुभवश्च उपलब्धिहेतोः उपलब्धिविषयस्य च पौर्वापर्यनियमं नानुमन्यत इति क्वचिदुपलब्धिहेतुः पूर्वम् । पश्चादुपलब्धिविषयः । क्वचित्पूर्व-मुपलब्धिविषयः पश्चादुपलब्धिहेतुः क्वचिदुभावपि सह भवत इति ।

[3] लब्धिवि

[4] यौश्चस

[5] प्रम यि

[6] यि प्रमा

[प्रमाणपरीक्षाया माक्षेपनिरासः]

एवञ्च—

त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥

अयमपि प्रतिषेधः त्रिष्वपि कालेषु नोपपद्यत इति सूत्रार्थः । अस्य विभागः पूर्वं हि प्रतिषेधसिद्धावसति प्रतिषेध्ये किमनेन प्रतिषिध्यते । पश्चात्सिद्धौ प्रतिषेध्यस्यासिद्धिः, प्रतिषेधाऽभावादिति । युगपत्सिद्धौ प्रतिषेध्यसिद्ध्यभ्यनुज्ञानादनर्थकः प्रतिषेधः । प्रतिषेधलक्षणे च वाक्ये अनुपपद्यमाने सिद्धं प्रत्यक्षादीनां प्रमाणत्वमिति ॥ १२ ॥

सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥

त्रैकाल्यासिद्धेत्यस्य हेतोरुदाहरणमुपादीयते न वा? यद्युपादीयते व्याघातो भवति । प्रत्यक्षादीनां अप्रामाण्याभ्युपगमादुपादीयमानमपि नार्थं साधयतीति व्यर्थम् ।

अथ साधयति, व्याघातः । अथ नोपादीयते अप्रदर्शितं हेत्वर्थस्य साधकत्वम् इति अप्रदर्शितदृष्टान्तो हेतुर्न साधक इति सोऽयं हेतुः सर्वप्रमाणैर्विप्रतिषिद्धो [1]विरुद्धो भवति । "सिद्धान्तमभ्युपेत्यतद्विरोधी विरुद्ध" इति । वाक्यार्थोऽस्य सिद्धान्तः, स च वाक्यार्थः प्रमाणानि

---

[1] अयमाशयः—पूर्वपक्षिणा हि "प्रमाणानि नार्थं साधयन्तीति" सिद्धान्तमभ्युपगम्य तत्साधनाय पञ्चावयवोपेतः न्यायः प्रदर्श्यते । तत्र चासति पञ्चावयवानां स्वार्थसाधकत्वे तदीयसिद्धान्ताऽसिद्धिः । सिद्धान्तस्थापनाय चेदङ्गीक्रियते पञ्चावयवानां साधकता तर्हि सिद्धान्तस्य तिलाञ्जलिरेव शरणम् । तदिदमाह—विरुद्धो भवतीति ।

नार्थं साधयन्तीति । [1][इदं च प्रमाणानामुपादानमर्थसाधनाय । "प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरिति बुद्धिस्पन्दादीनि अवर्जयन् बुद्ध्या वाक्यमुच्चारयसि स्थाण्वादीन्परिहरन् पादविहरणादीनि करोषि, ते एते वाक्यप्रवृत्ती प्रमाणप्रतिषेधान्न सम्भवत इति ।] ॥ १३ ॥

तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥

अथ स्ववाक्याश्रितप्रमाणव्यतिरेकेण प्रमाणानि प्रतिषिध्यन्ते । एवं सति न सर्वं प्रमाणं प्रतिषिद्धं भवतीति । विप्रतिषेध इति वीत्यय-मुपसर्गः विशेषप्रतिषेधे न व्याघाते इति । किमुक्तं भवति—कानिचित्प्र-माणानि प्रतिषिध्यन्ते कानिचिदभ्यनुज्ञायन्त इति । यानि स्ववाक्याश्रितानि तानि अभ्यनुज्ञायन्ते, यानि परवाक्याश्रितानि तानि प्रतिषिध्यन्त इति ।

[2][यच्चेदं वाक्यं "प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धे"रिति किमिदं प्रमाणस्वरूपमथ नेति । यदि प्रमाणस्वरूपं, तदा व्याघातः । अथ न, तथापि नानेन कश्चिदर्थः सिद्ध्यतीति व्यर्थम् ।] ॥ १४ ॥

त्रैकाल्याप्रतिषेधश्च शब्दा[3]दातोद्यसिद्धिवत्तत्सिद्धेः ॥ १५ ॥

उक्तः पूर्वमुपलब्धिहेतोरुपलब्धिविषयस्य च पूर्वापरसद्भावानियम

---

[1] [ ] एतच्चिह्नान्तर्गतानि वाक्यानि मूलकोशस्य त्रुटितत्वाद्यथा-वार्तिकमायोजितानि ।

[2] [ ] एतच्चिह्नान्तर्गतानि वाक्यानि मूलकोशस्य त्रुटितत्वाद्यथा-वार्तिकमायोजितानि ।

[3] शब्दाकृती

इति। तत्रैकां विधामुदाहरति—शब्दादातोद्यसिद्धिवदिति। यथा [1]पूर्वसिद्धमातोद्यं पश्चात्सिद्धेन शब्देनानुमीयते साध्यमातोद्यं साधनं च शब्दः। अन्तर्हिते ह्यातोद्ये स्वनतोऽनुमानं भवतीति। वीणा वाद्यते, वेणुः पूर्यते इति स्थानविशेषेण आतोद्यविशेषं प्रतिपद्यते पूर्वसिद्धं पश्चात्सिद्धेन उपलब्धिहेतुना प्रतिपद्यते निदर्शनार्थत्वाच्च। शेषयोर्विधयोर्यथोक्ते उदाहरणे वेदितव्ये ॥ १५ ॥

[प्रमाणप्रमेयव्यवहारस्य पारमार्थिकत्वसमर्थनम्]

प्रमाणं प्रमेयमिति च समाख्यासमावेशेन वर्तते समाख्यानिमित्तवशात्। समाख्यानिमित्तं तूपलब्धिसाधनं प्रमाणम्। उपलब्धिविषयश्च प्रमेयम्। यदा चोपलब्धिविषयः कस्यचिदुपलब्धिसाधनं भवति तदा प्रमाणमिति प्रमेयमिति चैकार्थो विधीयते इत्यस्यार्थस्य ज्ञापनार्थं सूत्रं—

---

[1] पूर्वसिद्धमिति। प्राग्ज्ञप्तिविषयमित्यर्थः। 'ततं वीणादिकं वाद्यम् आनद्धं मुरजादिकम्। वंश्यादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥'' इत्यमरसिंहः।

प्रकृते च त्रैकाल्यप्रतिषेधो न युक्तः। तथाहि—यथा पश्चाद्भाविनः शब्दात् पूर्वसिद्धस्यातोद्यस्य ज्ञप्तिः, यथा च पूर्वसिद्धाद्धूमात्तद्विशेषणप्रतिपत्तिः, यथा च सूर्यः पश्चात्कालीनवस्तुप्रकाशको भवति, तथाऽत्रापीति ध्येयम्।

इदं पुनरवधेयम्—प्रमा सर्वत्र प्रमाणोत्तरभाविन्येव। न तु प्रमोत्तरं प्रमाणजन्म। चक्षुरादेः प्रमाणाद्वस्तुनो घटादेः प्रमितिरिति

[1]प्रमेया च तुलाप्रामाण्यवत् ॥ १६ ॥

किमुक्तं भवति? यथा गुरुत्वपरिमाणज्ञानसाधनं तुलाद्रव्यं समाहारगुरुत्वस्येयत्तापरिच्छेदनिमित्तत्वात् प्रमाणं, सुवर्णादिना परिच्छिद्यमानेयत्तैषा तुलेति परिच्छेदविषयत्वेन व्यवतिष्ठमाना प्रमेयम्। उपलब्धौ स्वातन्त्र्यात्प्रमाता। बुद्धिहरलब्धिसाधनत्वात्प्रमाणम्। उपलब्धिविषयत्वात्तु प्रमेयम्। उभयाभावात्प्रमितिरिति। एवमर्थविशेषेऽपि समाख्यासमावेशो योज्यः ॥ १६ ॥

अत्रेदं चिन्त्यते—किमेतानि प्रमाणानि प्रत्यक्षादीनि स्वोपलब्धौ प्रत्यक्षादिव्यतिरिक्तं प्रमाणान्तरं प्रयोजयन्ति? अथ निःसाधनैव प्रमाणेषूपलब्धिरिति। किञ्चातः—

प्रमाणतस्सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥ १७ ॥

प्रमाणविषयायाः सिद्धेर्यदि प्रमाणं साधनं, प्रमाणान्तरं प्राप्नोति,

---

प्रमाणस्य पूर्वभावित्वसिद्धिः। प्रमावैशिष्ट्यं पुनः पूर्वं नास्ति तथापि कदाचित्पाकसम्बन्धवतः पाचकत्वव्यवहृतिरिव कदाचित्प्रमासम्बन्धेनैव प्रमाणत्वमव्याहतं वेदितव्यम्।

[1] 'प्रमेयता च तुलाप्रामाण्यव'दिति वृत्तिकृतो विश्वनाथस्याभिप्रायानुरोधेन पाठः। गोस्वामिभट्टाचार्यस्यैवमेव हि पाठः। न्यायवार्तिकतात्पर्यटीकाकृता, तत्त्वालोककृता च 'प्रमेया च तुलाप्रामाण्यवदि'ति पाठः स्वीकृतः। प्रमेयतेति पाठे, यथा तुलायाः प्रामाण्यं प्रमेयता चैवमेव प्रमाणानामपीत्यर्थः।

प्रत्यक्षादीनां साध्यत्वान्न साध्यं साधनं भवतीति[1] ॥ १७ ॥

अथ प्रमाणान्तरमन्तरेण निस्साधनैव प्रमाणेषूपलब्धिरित्याशङ्कयाह—

तद्विनिवृत्तेर्वा प्र[2]माणान्तरसिद्धिवत् प्रमेयसिद्धिः ॥ १८ ॥

यत्र प्रत्यक्षाद्युपलब्धौ प्रमाणान्तरं निवर्तते आत्माद्युपलब्धावपि प्रमाणान्तरं [3]निवर्त्स्यति ॥ १८ ॥

एवं च सर्वप्रमाणविलोप इति । अत आह—

---

[1] अयमाशयः—प्रत्यक्षादिप्रमाणानामुपलब्धौ किं विद्यते प्रमाणान्तरापेक्षोत स्वेनैव स्वप्रामाण्यग्रहणम् ? नाद्यः । अस्य प्रामाण्यज्ञापकस्यान्यस्य प्रामाण्यं कुतस्सिद्धमिति तत्प्रामाण्ये प्रमाणान्तरमन्वेषणीयम् । तत्प्रामाण्ये पुनः प्रमाणान्तरमित्यनवस्थाऽऽपातः । अथ पुनः प्रत्यक्षप्रामाण्यं प्रमाणान्तरेण, तत्प्रामाण्यं च प्रत्यक्षरूपप्रमाणेनैव चेत् अन्योन्याश्रयापातः ।

ननु न प्रत्यक्षप्रामाण्ये प्रमाणान्तरान्वेषणहेतुकाऽनवस्था, नाप्यन्योन्याश्रयः, प्रत्यक्षं स्वमहिम्नैव स्वप्रामाण्यं गोचरयतीत्यङ्गीकारात् । मैवम् । न हि छेदकः कुठारः स्वयमात्मानं छिनत्ति । न च वनदाहकाग्नेः स्वेनैव स्वनाश इव प्रमाणस्यापि स्वेनैव तद्भाव इति वाच्यं, वैषम्यात् । अग्निप्रज्वलनविनाशयोर्वाय्वादिकारणान्तरोपनिपातजत्वात । तस्मात्प्रामाण्यं प्रत्यक्षादेर्दुर्निरूपमिति ।

[2] माणासि

[3] वर्तिष्यते

न प्रदीपप्रकाशवत्तत्सिद्धेः ॥ १९ ॥

[1]प्रदीपप्रकाशो ही घटाद्युपलब्धिसाधनाङ्गत्वात्प्रमाणम्, स च प्रत्यक्षादिभिरेवोपलभ्यत इति। तथा प्रमाणादीन्यपि प्रत्यक्षादिभिरेवो-[2]पलप्स्यन्त इति दृष्टान्तमात्रमेतत्। अत्र न्याय उच्यते—प्रत्यक्षादीनि स्वोपलब्धौ प्रमाणान्तराप्रयोजकानि परिच्छेदसाधनत्वात् प्रदीपवदिति।

तेनैव तस्याग्रहणमिति चेत् नैष दोषः। प्रमाणलक्षणे न ह्येतानि सङ्गृहीतानि लक्षणानि तत्र कस्यचित्केनचित् ग्रहणमित्यदोषः ॥ १९ ॥

परे तु हेतुपरिग्रहमन्तरेण दृष्टान्तमात्रं प्रदीपप्रकाशसूत्रेणोपाददते इति तान्प्रतीदमुच्यते—

---

[1] प्रदीपप्रकाशेति अयमाशयः—प्रदीपसहकृतालोकाद्घटप्रत्यक्षोत्पत्तिः। अन्यथा प्रदीपस्य घटप्रकाशकत्वम्; प्रदीपप्रकाशकं चक्षुः, तत्प्रकाशकमन्यदित्यनवस्था स्यात्। ततश्च न केनापि किञ्चित्प्रसिध्यतीत्यायातम्। न चात्र सिद्धविषयत्वेन उत्पत्तिज्ञप्त्यन्यतराप्रतिबन्धकत्वेन वा नानवस्था दूषणमिति वाच्यम्। असिद्धविषयत्वेनानवस्थाया दुर्वारत्वात्। प्रदीपोऽपि न घटप्रकाशकः स्यात्।

अथ च घटप्रत्यक्षे तत्तत्प्रकाशानपेक्षणात् नानवस्थेति चेत्, तदा प्रकृतेऽपि समम्। न हि प्रमाणात्प्रमेयसिद्धौ प्रमेयसिद्धिरपेक्षिता। यदा च प्रमाणसिद्धिरपेक्षिता तदा तत्रापि प्रमाणमपेक्ष्यताम्; तच्चानुमानादिनैवेति न प्रमाणान्तरकल्पनाप्रसङ्गः; नानवस्था वा। सर्वत्र प्रमाणसिद्धेरनपेक्षितत्वात्।

[2] लभ्यन्ते

[1]क्वचिन्निवृत्तिदर्शनात् अनिवृत्तिदर्शनाच्च क्वचिदनैकान्तः ॥ २० ॥

यथा प्रदीपप्रकाशस्तथा प्रमाणानि, न पुनः स्थाल्यादिरूपं तथा प्रमाणानीति कोऽत्र नियमहेतुः, प्रदीपप्रकाशदृष्टान्तो भवतु, माभूत् स्थाल्यादिदृष्टान्त इत्यत्रापि नियमहेतुर्वक्तव्यः, सोऽयमुभयथाऽनेकान्तः विशेषहेतुपरिग्रहमन्तरेण [2]प्रसक्तो दृष्टान्तः। विशेषहेतुपरिग्रहे सति उपसंहाराभ्यनुज्ञानादप्रतिषेधः। यदि पुनरयं प्रदीपप्रकाशदृष्टान्तो विशेषहेतुना प्रकाशकत्वादिना सङ्गृहीतः तत एकस्मिन्पक्षेऽयमनुज्ञायमानो न शक्यः प्रतिषेद्धुं इत्यनेकान्त इत्ययं दोषो न भवतीति। प्रत्यक्षादीनां प्रत्यक्षादिभिरेवोपलब्धौ अनवस्थेति चेन्न। प्रत्यक्षेण अर्थमुपलभे इति संवित्तिविषयं संवित्तिनिमित्तं चोपलभमानस्य सर्वो व्यवहार उपपद्यते। सोऽयं तावत्येव निवर्तत इति ॥ २० ॥

---

[1] क्वचिदिति सूत्रं भाष्यवाक्यत्वेन वृत्तिकृता व्याख्यातम्।

[2] "प्रदीपस्य प्रकाशान्तरं विना प्रकाशकत्ववत् प्रमाणानामपि प्रमाणान्तरमन्तरेणैव प्रमेयप्रकाशकत्वमिति सूत्रार्थं केचन मन्यन्ते। तान्प्रत्याह— "क्वचिन्निवृत्तिदर्शनादिति। क्वचित्प्रदीपादौ प्रमाणान्तरस्य निवृत्तिदर्शनात् प्रमाणान्तरापेक्षादर्शनात् त्वदीयो हेतुः अनैकान्तिकः अनियतः। तथा च प्रदीपदृष्टान्तात् प्रमाणान्तरापेक्षानिवृत्तिः साध्यते, घटदृष्टान्तेन प्रमाणान्तरापेक्षैव किं न साध्यते। तथा च दृष्टान्तसमा जातिरित्यर्थः।

त्वद्व्याख्याने कथं नायं दोष इत्यत आह—विशेषहेतुपरिग्रहे सत्युपसंहाराभ्यनुज्ञानादप्रतिषेधः। मन्मते विशेषहेतोर्व्याप्तिपक्षधर्मताश्रयस्य

[प्रत्यक्षलक्षणाक्षेपः]

सामान्येन प्रमाणानि परीक्ष्य विशेषेण परीक्ष्यते तत्र प्रत्यक्षमादावुक्तमिति तत्परीक्ष्यते—

प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ॥ २१ ॥

यदिदं भवता प्रत्यक्षलक्षणमुच्यते—इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादि एतदसमग्रम् । अन्यान्यपि प्रत्यक्षस्य कारणानि सन्ति, तानि नोक्तानि ; [1]यथाऽऽत्ममनःसंयोगादि ।

तथा लक्षणमप्येतन्न भवति । कस्मात्? उत्पत्तिकारणापदेशात् । न हि कारणापदेशो वस्तुनो लक्षणम् । न हि घटादेः कार्यस्य मृत्पिण्डादिक्रमोत्पत्तिर्लक्षणम् । [2]न । उभयथाऽप्यदोषात् । यदि कारणं तदापि न दोषः । यदि लक्षणं तथापि न दोषः । कथं? कारणपक्षे

---

परिग्रहे सत्युपसंहारस्य साध्यसाधनस्याभ्यनुज्ञानादुक्तानेकान्तात्मकः प्रतिषेधो न भवति'' ।

[2] प्रसन्नइ

[1] यथेति । आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षमिति ज्ञानक्रमः । तथा प्रत्यक्षे आत्ममनःसंयोगस्यापि कारणस्य सत्त्वेन तदनन्तर्गतस्य, 'इन्द्रियार्थसन्निकर्षोत्पन्न' मित्यादिप्रत्यक्षलक्षणस्यासमग्रता ।

किञ्च कारणापदेशरूपत्वादपि नेदं लक्षणं भवितुमर्हति । अन्यथा मृदादीनां घटलक्षणता स्यात् ।

[2] मु उ

तावदुक्तं नेदं कारणावधारणार्थं सूत्रं, अपि तु प्रत्यक्षस्य यदसाधारणं कारणमनुमानादिव्यवच्छेदकं तद्वचनार्थमिति । नात्ममनःसंयोगादेरनुमानसाधारणस्यात्र प्रसङ्गः । लक्षणपक्षेऽपि न दोषः । असाधारणत्वादिन्द्रियार्थसन्निकर्षस्येति ॥ २१ ॥

नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ॥ २२ ॥

आत्ममनःसन्निकर्षाभावेऽपि नोत्पद्यते बुद्धिः इन्द्रियार्थसन्निकर्षाभावादिति । न, उक्तोत्तरत्वात् । नेदं कारणसामान्यावधारणार्थं सूत्रं, अपि तु विशिष्टकारणावधारणार्थमिति ॥ २२ ॥

[पार्श्वस्थशङ्कोत्थापनम्]

ये तु सति भावात् असति चाभावात् [1]कारणभावं वर्णयन्ति, तेषां—

दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २३ ॥

दिग्देशकालाकाशेषु असत्सु ज्ञानाभावात्तान्यपि ज्ञानकारणानीति प्राप्तमिति । केन पुनर्न्यायेन दिगाद्यकारणम् [2]सामर्थ्यानुपलब्धेः । न हि ज्ञानोत्पत्तौ दिगादेः सामर्थ्यमुपलभ्यते । अथ मन्यसे, दिगादिः सन्निधिमात्रेण ज्ञानोत्पत्तौ कारणमिति, तदयुक्तं सन्निधेरवर्जनीयत्वात् । [3]कारणभावे हेतुर्वक्तव्यः ॥ २३ ॥

---

[1] करणाभावं

[2] मू धामभानु

[3] करणाभावे

यद्येवं आत्ममनःसंयोगस्तर्ह्युपसंख्येयः, नोपसङ्ख्येयो गम्यमानत्वादित्याह—

[1]ज्ञानलिङ्गत्वादात्मनो नानवरोधः ॥ २४ ॥

प्रागभिहितं ज्ञानमात्मलिङ्गमिति । तेन त्ममनःसंयोगोऽनुक्तोऽप्यनुमेयः ॥ २४ ॥

तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ २५ ॥

अनवरोध इति वर्तते । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्युच्यमाने सिद्ध्यत्येव मनःसन्निकर्षापेक्ष इन्द्रियार्थसन्निकर्षो ज्ञानसाधनमिति ॥ २५ ॥

[प्रत्यक्षलक्षणाक्षेपपरिहारः]

अथ कस्मादिन्द्रियार्थसन्निकर्षोऽभिधीयते नात्ममनःसन्निकर्ष इन्द्रियमनःसन्निकर्षो वेति ?

प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम् ॥ २६ ॥

इन्द्रियार्थसन्निकर्षः [2]प्रत्यक्षस्यैव निमित्तम् । आत्ममनःसंयोगः प्रत्यक्षस्य चान्यस्य चेति । ननु 'इन्द्रियार्थसन्निकर्षेण समानत्वादिन्द्रिय-

---

[1] प्राक्तनस्यास्य च सूत्रस्य महर्षिकृतत्वं केचिन्नाभ्युपयन्ति ।

[2] प्रत्यक्षत्वावच्छिन्नं प्रतीत्यर्थः । तथा च प्रत्यक्षसामान्ये इन्द्रियार्थसन्निकर्षोऽपेक्ष्यते । तेन, 'इन्द्रियार्थसन्निकर्षे'त्यादिभिन्नस्य प्रत्यक्षलक्षणस्य अतिव्याप्त्यादिदूषितत्वेन अलक्षणत्वं ज्ञेयम् ।

मनःसंयोगः वक्तव्यः' नेदं कारणावधारणार्थं सूत्रम् [1]इत्युक्तत्वात् ॥ २६ ॥

[2]सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात् ॥ २७ ॥

इन्द्रियार्थसन्निकर्षस्य प्राधान्यदर्शनपरमिदं सूत्रम् । यदा तु तीव्रौ ध्वनिस्पर्शौ सुप्तस्य प्रबोधकारणं भवतः तदेन्द्रियार्थसन्निकर्षनिमित्तमेव [3]प्रबोधज्ञानमुत्पद्यते ।

विषयान्तरव्यासक्तमनसः सङ्कल्पवशात् विषयान्तरं जिज्ञासमानस्य बाह्यविषयोपनिपातात् ज्ञानमुत्पद्यते । तत्र पीन्द्रियार्थसन्निकर्षस्यैव प्राधान्यं नात्मादिसन्निकर्षस्येति ॥ २७ ॥

[4]प्राधान्ये हेत्वन्तरम्—

---

[1] इत्युक्तत्

[2] इदं तु मूलकोशे सूत्रत्वेनापरिगृहीतम् । यथाविवरणं सूत्रत्वं निरधारि ।

[3] प्रबोधज्ञानमिति । वर्षाकाले सायं सपत्नीकः युवा शष्कुली-भक्षणरतः प्रियया सल्लपंस्तिष्ठति । तदा विषयासक्तमनसः विनैव मनः-संयोगं घनगर्जितादिना श्रोत्रसन्निकर्षात् शीघ्रमेव ज्ञानमुत्पद्यते । सर्वत्रतद्व-दिन्द्रियार्थसन्निकर्षस्य प्राधान्यं स्वीकरणीयम् ।

[4] नेयमपपा

तैश्चापदेशो ज्ञानविशेषाणाम् ॥ २८ ॥

तैरिन्द्रियैरथैश्च ज्ञानविशेषा [1]व्यपदिश्यन्ते । घ्राणविज्ञानं चक्षुर्विज्ञानं रसनविज्ञानमिति गन्धज्ञानं रूपज्ञानं रसज्ञानमिति च [2]इन्द्रियविषयविशेषाच्च पञ्चधा बुद्धिर्भवति । अतः प्राधान्यमिन्द्रियार्थसन्निकर्षस्येति । असाधारणेन च व्यपदेशो दृष्टः, यथा शाल्यङ्कुर इति ॥ २८ ॥

[प्रत्यक्षलक्षणे पुनराक्षेपः]

[3]व्याहतत्वादहेतुः ॥ २९ ॥

अनेन त्रिसूत्रीं प्रत्याचष्टे—"प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थसन्निकर्षस्ये"ति "सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्" "तैश्चापदेशो ज्ञानविशेषाणाम्" इतीयं किल त्रिसूत्री आत्ममनसोः संयोगस्य ज्ञानकारणत्वं प्रतिषेधतीति व्याघातः, पूर्वम् आत्ममनःसंयोगस्य ज्ञानकारणत्वाभ्यनुज्ञानात् ।

अथ माभूद्व्याघातः इति, सर्वं ज्ञानमात्ममनःसंयोगजमिष्यते, देश्यावस्थायामेतत् कस्मादात्ममनःसंयोगो नाभिधीयत इति ;

---

[1] व्यपदिश्यन्ते –सङ्केत्यन्ते

[2] इन्द्रियेति । अयमाशयः—पञ्चेन्द्रियतदीयविषयाणां सम्प्रयोगेन भवति बुद्धिः पञ्चधेति इन्द्रियसंख्यानुरोधेन ज्ञानस्य पञ्चविधत्वमिति भावः ।

[3] प्राक्तनसूत्रत्रयेण इन्द्रियार्थसन्निकर्ष एव ज्ञानकारणं नात्ममनःसन्निकर्षः, इन्द्रियमनःसन्निकर्षो वेत्युक्तं सिद्धान्तिनेति मन्वान आशङ्कते—व्याहतत्वादिति ।

[[1]उक्तोत्तरमेतत्। किमिति? नेदं कारणावधारणार्थं सूत्रं, अपि तु विशिष्ट-कारणवचनमिति ]।२९॥

[व्याघातनिवारणम्]

[2]नार्थविशेषप्राबल्यात् ॥ ३० ॥

नानया त्रिसूत्र्या आत्ममनःसंयोगस्य कारणभावः प्रतिषिध्यते, अपि तु प्राधान्यमिन्द्रियार्थसन्निकर्षस्योपपाद्यत इति न व्याघातः ॥ ३० ॥

[प्रत्यक्षस्यानुमानान्तर्भावशङ्का]

एवं तावत्समधिगतं प्रत्यक्षलक्षणम्, अतः परमिदानीं प्रत्यक्षस्यानु-मानेऽन्तर्भावं कुर्वाण इदमाह—

---

[1] [ ] एतच्चिह्नान्तर्गतो भागः मूलकोशस्यापूर्णत्वेन यथावार्तिक-मायोजि।

[2] "अपि तु विशिष्टकारणवचन"मितीममर्थं विशदयति—"नार्थ-विशेषप्राबल्या"दिति सूत्रेण। स्पष्टयति—प्राधान्यमिति। ज्ञान-सामान्यं प्रति आत्ममनःसंयोगस्य कारणत्वं प्रागुपपादितम्। इन्द्रियार्थ-सन्निकर्षस्य च प्रत्यक्षं प्रत्यसाधारणकारणत्वेन प्राधान्याच्चथा निर्देश इत्यर्थः।

ततश्च न केवलमात्ममनःसंयोगः प्रत्यक्षकारणमपि तु प्राधान्यादि-न्द्रियार्थसन्निकर्षोऽपीत्युक्तं स्यात्। ततश्च मनःसंयोगस्य कारणताऽप्रतिषे-धात् न व्याघात इत्यर्थः।

प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥ ३१ ॥

यदिदमिन्द्रियार्थसन्निकर्षादुत्पद्यते "अयं वृक्षः" इति [1]एतत्किल प्रत्यक्षं, तच्चानुमानमेव। कस्मात्? एकदेशग्रहणाद्वृक्षोपलब्धेः। अर्वाग्भागलक्षणमेकदेशमयं गृहीत्वा हि [2]वृक्षमुपलभते; तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति तादृगेव तद्भवति, [3]किं पुनरत्रैकदेशग्रहणादयं प्रतिपद्यते? [4]अवयवसमूहावयविपक्षे अवयवान्तराणि, द्रव्यान्तरोत्पत्तिपक्षे तानि चावयवी चेति। [5]अवयवसमूहपक्षे तावत् वृक्षबुद्धेरभावः, एकदेशग्रहणात्। [6]द्रव्यान्तरोत्पत्तिपक्षे [[7]अस्यैकदेशसम्बद्धस्याऽग्रहणान्नावयव्यनुमेयः। ग्रहणे चाविशेषादनुमेयत्वाभावः। तस्मान्नानुमा वृक्षबुद्धिः]। ३१ ॥

---

[1] ति किल

[2] वृक्षमुपलभते, न चार्वाग्भागो वृक्ष इत्यर्थः। अयमाशयः—अवयवेभ्यो नार्थान्तरभूतोऽवयवी नामास्ति कश्चित्। कतिपयानेवावयवान् गृहीत्वा अगृहीतान् सन्निहिताननुमाय जायते 'अयं वृक्ष' इति धीः। ज्ञानस्यास्याऽनुमाजन्यत्वेनाप्रत्यक्षत्वम्। ततश्च न्यूनाधिकसङ्ख्याव्यवच्छेदनियमो न युज्यते विभागसूत्रेण इति।

[3] सिद्धान्ती पृच्छति— किं पुनरिति।

[4] पूर्वपक्षी उत्तरयति—अवयवेति। अत्र द्विधा विप्रतिपत्तिर्बोध्या—अवयवसमूह एवावयवी नातोऽन्योऽस्ति कश्चनावयवी नामेति पक्षे, दृष्टेभ्योऽवयवेभ्यः अन्येऽवयवा अनुमीयन्ते।



[5] प्रथमपक्षं सिद्धान्ती दूषयति—अवयवसमूहपक्षे इति। यद्येक

[प्रत्यक्षस्यानुमायाः पार्थक्यसमर्थनम्]

विरुद्धश्चायं हेतुः—एकदेशग्रहणाद्वृक्षोपलब्धिरिति । कथमिति ?—

प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ ३२ ॥

प्रत्यक्षमनुमानमित्येव ब्रुवता प्रत्यक्षमपह्नूयते । तदपह्नवाच्च यदेकदेशग्रहणं प्रत्यक्षमाश्रीयते तद्व्याहतं भवतीति विरुद्धत्वं च । एकदेशग्रहणमात्रेण प्रत्यक्षस्य लक्षणं सिद्ध्यतीति न प्रत्यक्षस्य हानिः । [1]इत्थंसूत्रयोजना—न प्रत्यक्षमनुमानं, कस्मात् ? प्रत्यक्षेणैवैकदेशस्योपलम्भात्. यावच्चार्थजातं तस्य विषयस्तावदभ्यनुज्ञायमानं प्रत्यक्षस्य व्यवस्थापकं भवतीति ।

इतश्च प्रत्यक्षस्य नानुमानत्वप्रसङ्गः, तत्पूर्वकत्वात् । प्रत्यक्षपूर्वकमनुमानम्, न तु प्रत्यक्षपूर्वकं प्रत्यक्षमित्ययं चानयोर्विशेष इति ।

---

प्रत्यक्षदृष्टोऽर्वाग्भागः न वृक्षः एवमनुमितौ परमध्यभागावपि । ततश्च वृक्षबुद्ध्यपलापप्रसङ्गः ।

[6] द्वितीयपक्षं निराकरोति—द्रव्यान्तरेति । अनुमेयस्य व्याप्त्यादिसम्बन्धिग्रहणसापेक्षत्वेन सम्बन्धिग्रहणे च सम्बद्धग्रहणस्यानिवार्यत्वेन व्याप्त्यादेर्ग्रहणमङ्गीकरणीयम् । तथाचोक्तव्याप्तिग्रहकालेऽवयव्यपि गृहीतः स्यात् । सति चैवं प्रत्यक्षग्रहणमेवाभ्युपेतं स्यात् तथा चास्यानुमेयत्वभङ्गः ।

[7] [ ] एतच्चिह्नान्तर्गतो भागो मूलकोशे न विद्यते । ग्रन्थस्य साकाङ्क्षत्वेनेतरो भागः यथाभाष्यमायोजि ।

[1] न ब्रूमो वयं सर्वं प्रत्यक्षस्य विषय इति । किन्तु यावदिन्द्रियार्थसन्निकर्षादुत्पद्यते तावदेव प्रत्यक्षमिति । ततो न दोषः ।

[1]न चैकदेशोपलब्धिरवयविसद्भावात् । न चैकदेशोपलब्धिमात्रं किं तर्हि, तत्संहितावयव्युपलब्धिश्च । कस्मात्? अवयविसद्भावात् । अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी तस्यावयवस्थानस्योपलब्धिकारणप्राप्तस्य एकदेशोपलब्धावनुपलब्धिरनुपपन्नेति ॥ ३२ ॥

[अवयविपरीक्षाप्रकरणम्]

साध्यत्वादवयविनि सन्देहः ॥ ३३ ॥

यदुक्तमवयविसद्भावादिति, अयमहेतुः साध्यत्वात् । साध्यं तावदनुपपादितमेतत्कारणेभ्यो द्रव्यान्तरमुत्पद्यते [2]इत्यनुपपत्तिः । एवं च विप्रतिपत्तिमात्रं भवति । विप्रतिपत्तेश्चावयविनि सन्देह इति ॥ ३३ ॥

सर्वाग्रहणमवयव्यसिद्धेः ॥ ३४ ॥

संशयपाकरणार्थं सूत्रम् । सर्वेषामर्थानामग्रहणं प्रसज्येत । यद्यवयव्यर्थान्तरभूतोऽवयेभ्यो नास्ति । कथमिति? परमाणवोऽतीन्द्रियाः । अवयविद्रव्याणि च भवद्भिः न [3]प्रतिपद्यन्ते । तदनभ्युपगमे च योऽयं द्रव्यप्रत्ययः कुम्भ इति, गुणप्रत्ययः श्याम इति, क्रियाप्रत्ययश्चलतीति सामान्यप्रत्ययोऽस्तीति, विशेषप्रत्ययः कलश इति, समवायप्रत्ययः इह घटे

---

[1] इदं क्वचित्सूत्रवाक्यत्वेन पठ्यते । तथापीदं भाष्यवाक्यमिति वार्तिकतात्पर्यपरिशीलनादवगम्यते ।

[2] इत्यनुत्पत्तिरिति मूलकोशे

[3] प्रतिपाद्यन्ते

रूपादय इति । तथान्येऽपि प्रत्यया: एको महान् [1]इत्यादयो न स्युः । अस्ति च सर्वस्य द्रव्यगुणकर्मादिप्रपञ्चस्य, तेन सर्वस्य ग्रहणात् पश्यामोऽस्त्यवयव तिरिक्तोऽवयवीति ॥ ३४ ॥

धारणाकर्षणोपपत्तेश्च ३५ ॥

अवयव्यर्थान्तरभूत इति चार्थः । किमिदं धारणं नाम ? उच्यते । यदाऽयमवयविन एकदेशं गृह्णाति तदा तेनैकदेशग्रहणेन सहावयविनमपि गृह्णाति । तदा तेनैकदेशग्रहणेन सहावयविनमपि गृह्णाति। तेन च ग्रहणेन [2]यदवयविनो देशान्तरप्राप्तिनिवारणं तद्धारणम् । [3]आकर्षणं नाम यदैकदेशेन सह अवयविनो देशान्तरप्रापणं, ते एते धारणाकर्षणे अवयविनं साधयत: ॥ ३५ ॥

अवयव्यपलापवादी चैवं पर्यनुयोज्यः । येयमेकं इदं द्रव्यमिति बुद्धिः सा किं नानाविषया अभिन्नार्थविषयेति ? यदि नानाविषया बहुष्वदर्शनादयुक्ता । अथाभिन्नार्थविषया [4]योऽसावेकबुद्धेर्विषयः सोऽवयवीति—

सेनावद्ग्रहणमिति चेन्न अतीन्द्रियत्वादणूनाम् ॥ ३६ ॥

यथा सेनाङ्गेषु वनाङ्गेषु च दूरादगृह्यमाणपृथक्त्वेषु एकमिदमिति

---

[1] हान्वाद मूलकोशपाठः

[2] यदवयविनि मूलकोशपाठः

[3] अकर्षणम्—मूलकोशपाठः

[4] योऽसावभिन्नोऽर्थः इति मूलकोशपाठः

उत्पद्यते बुद्धिः एवमणुषु समुच्चितेष्वगृह्यमाणपृथक्त्वेषु एकमिदमिति उत्पद्यते बुद्धिरिति । न, अतीन्द्रियत्वादणूनाम् । समुच्चयो नाम संयोगः । न चातीन्द्रियाणां संयोगः प्रत्यक्षो भवितुमर्हति । यश्चायमनेकस्मिन् एकप्रत्ययः स मिथ्याप्रत्ययः । मिथ्याप्रत्ययनिमित्तं सामान्यदर्शनं विशेषानुपलब्धिरविद्यमानविशेष[1]दर्शनद्वारेणाध्यारोपित[2]त्वात् तद्विपरीतधर्मता । न चातीन्द्रियत्वादणूनां सामान्यदर्शनमस्ति । तदभावे कुतो विशेषादर्शनं तदभावे च न तद्विपरीतधर्माध्यारोपः । न च निमित्तमन्तरेण नैमित्तिकस्य मिथ्य प्रत्ययस्य प्रादुर्भावो युक्तः ॥ ३६ ॥

[अथ अनुमानपरीक्षा]

अथेदानीं अनुमानं परीक्ष्यते । किमिदमनुमानम्? उक्तं च "तत्पूर्वकम् अनुमान"मिति । तत्र च पूर्ववदुदाहरणानि नदीपूरः पिपीलिकाण्डसञ्चरणम् मयूरवाशितमिति । एतदुदाहरणव्यभिचारद्वारकं सूत्रम्—

**रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३७ ॥**

[3]रोधादपि नदी पूर्णा गृह्यते । तदा चोपरिष्टाद्वृष्टो देव इति

---

[1] र्शनत्वा × × ध्या इति मूलकोशपाठः

[2] हितस्य इति मूलकोशपाठः

[3] 'रोधादपि' सेतुसंबन्धादपि । नदीपूरस्य जलादरोधादपि संभावितत्वेन वृष्ट्या न नियतोऽस्ति संबन्ध इत्यर्थः । कार्यात्कारणानुमापकस्य अनुमानस्येदं दूषणम् ॥

मिथ्यानुमानम् । [1]नीडोपघातादपि पिपीलिकाण्डसञ्चरणं भवति तदा भविष्यति वृष्टिरिति मिथ्यानुमानम् । पुरुषोऽपि मयूरवाशितमनुकरोति तदपि शब्दसादृश्यान्मिथ्यानुमानं भवतीति ॥ ३७ ॥

अथ रोधोदघातसादृश्येभ्यो व्यभिचारादित्यस्य हेतोरसिद्धतोद्भावद्वारकं सूत्रं—

[2]नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३८ ॥

यत्तावद्रोधादपि नदीपूरो भवति तत्र नदीपूरमात्रेण नोपरि वृष्टिमद्देशसंबन्धित्वं नद्याः [3][साध्यते] अपि तु पूरविशेषेण । तस्य व्यभिचारादसिद्धो हेतुः । [4]एवमुपघातात् पिपीलिकाण्डसञ्चरणमात्रस्य व्यभिचारः । नावित्रस्तानां भूयसीनां पिपीलिकानां सञ्चरणविशेषव्यभिचारः । शब्दा-

---

[1] नीडोपघातादपि इति । नीडोपघातादपि पिपीलिकाण्डसञ्चरणस्य दर्शनेन तस्य वृष्टिं प्रति कारणत्वप्रतिपादनमयुक्तमित्यर्थः । कारणात्कार्यानुमानस्येदं दूषणम् । एवं मयूरवत्पुरुषस्याप्यनुकरणसम्भवेन मयूररुतस्य मेघानुमापकत्वं न सम्भवतीत्यर्थः ।

[2] अनुमानमिथ्यात्वं निराकरोति—नैकदेशेत्यादिसूत्रेण । अयमाशयः । नात्रानुमानव्यभिचारः शङ्क्यः । विशिष्टस्य लिङ्गत्वात्तस्याव्यभिचारित्वात् । नदीपूरमात्रस्य वृष्ट्यनुमापकत्वेऽपि फेन-मालिन्य-फलबुद्बुदादिसहितस्य वृष्ट्यनुमापकत्वाङ्गीकारात् । तादृशस्य चाव्यभिचरितत्वात ।

[3] × × ×

[4] एव × × × त

व्यभिचारोऽपि नास्ति। यस्मान्न शब्दमात्रमनुमानं मयूरास्तित्वे, न चात्र मयूरःसाध्यते अपि तु [1]शब्दगतविशेषः। ततो नानुमानाऽप्रामाण्यमिति। ॥ ३८ ॥

[वर्तमानकालपरीक्षाप्रकरणम्]

"त्रिकालविषयमनुमानं त्रैकाल्यग्रहणात्" इत्युक्तम्। तत्र वर्तमानकालप्रतिषेधार्थं सूत्रम्—

**वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ ३९ ॥**

वृन्तात् प्रच्युतस्य भूमिं प्रत्यासीदतः यदूर्ध्वं फलमवधिं कृत्वा-यावद्वृन्तमिति सः पतितोऽध्वा। तत्संयुक्तः कालः पतितकालः। पतन्तमवधिं कृत्वा यावद्भूमिरिति स पतितव्योऽध्वा। तत्संयुक्तः कालः पतितव्यकालः। नेदानीं तृतीयोऽध्वा विद्यते इति ॥ ३९ ॥

न, विरोधाद्वर्तमानः कालो नास्तीति ब्रुवन्नभ्युपगतौ कालौ बाधते इत्येतज्ज्ञापनार्थं सूत्रम्—

**तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात् ॥ ४० ॥**

वर्तमानापेक्षावितरकालौ। यस्य वर्तमानकालो नास्ति; तस्य वर्तमानानभ्युपगमेन अभ्युपगतयोरप्यभावः इति। न चायं कालोऽध्व-व्यङ्ग्यः। पततीति या पतनक्रिया सा यदोपरता स पतितकालः। यदोत्पत्स्यते स पतितव्यकालः। यदा द्रव्ये वर्तमाने क्रिया गृह्यते स वर्तमानकाल इति ॥ ४० ॥

---

[1] शब्दशेषः

अथ मन्यसे ; वर्तमानकालानभ्युपगमेऽपि अतीतानागतावितरेतर-सापेक्षौ सेत्स्येते इत्येतत्प्रतिषेधार्थं सूत्रं—

नातीतानागतयोरितरेतरापेक्षासिद्धिः ॥ ४१ ॥

न ह्यतीतानागतौ इतरेतरसापेक्षौ सिद्ध्यतः। कथमिति? वर्तमानाभावे किमतीतं किमनागतं कथं चेति न शक्यते वक्तुम्। न चेतरेत[1]रापेक्षया कस्यचित्सिद्धिरस्ति। यस्मादेकाभावे अन्यतराभावात् द्वयाभावः तस्मादस्ति वर्तमानः कालः ॥ ४१ ॥

[2]अर्थसद्भावव्यङ्ग्यश्चायं वर्तमानः कालः, विद्यते द्रव्यं, विद्यते गुणः, विद्यते कर्मेति, यस्य चायं नास्ति तस्य—

वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४२ ॥

[3]प्रत्यक्षमिन्द्रियार्थसन्निकर्षेण भवति। न चाविद्यमानमसदिन्द्रियेण सन्निकृष्यते। ततश्च [4]प्रत्यक्षानुपपत्तौ तत्पूर्वकत्वादनुमानागमयोरप्यनुपपत्तिः। ततश्च सर्वाग्रहणमिति ॥ ४२ ॥

---

[1] क्षासिद्धि—मू. को.

[2] प्राक्पतनक्रियाव्यङ्ग्यत्वं कालस्य प्रतिपादितम्। इदानीं तु विद्यते द्रव्यं विद्यते गुणः, इत्यादि प्रतीत्यनुरोधेन अर्थसत्वव्यङ्ग्यत्वमप्यस्ति क्रियाया इत्याह—अर्थसद्भावेति।

[3] अनर्थवि इति मूलकोशेऽस्ति।

[4] प्रत्यक्षानुपपत्तावििति। प्रत्यक्षस्योपजीव्यत्वेन तमनुसृत्य प्रवृत्तेरनुमानस्य तदनुपपत्तौ सर्वानुपपत्तिरित्यर्थः। ततश्च प्रमाणाभावे सर्वाग्रहणमापतितम्।

किञ्च—

क्रियमाणताकृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥ ४३ ॥

अत्र योपरता क्रिया सा कृतता। या चिकीर्षिता सा कर्तव्यता। या विद्यमाना सा क्रियमाणता। तदेवं क्रियासन्तानस्थस्त्रैकाल्यसमाहारः पचतीति वर्तमानग्रहणेन गृह्यते। क्रियासन्तानाविच्छेदो दृश्यते; नारम्भो नोपरमश्च। सोऽयमुभयथा वर्तमानकालः सिद्धः ॥ ४३ ॥

अथोपमानं परीक्ष्यते। किं पुनरुपमानं? "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमान"मित्युक्तम्। तस्याक्षेपः—

अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥ ४४ ॥

नात्यन्तसाधर्म्यादुपमानं भवति [यथा] गौरेवं गौरिति। प्रायः साधर्म्यादुपमानं न सिद्ध्यति। [1]यथानड्वानेवं महिषः इति। एकदेश-साधर्म्यादुपमानं न सिद्ध्यति। न हि सर्वेण सर्वमुपमीयते ॥ ४४ ॥

प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४५ ॥

न साधर्म्यस्य कृत्स्नप्रायाल्पभावमाश्रित्योपमानं प्रवर्तते। किं तर्हि? प्रसिद्धसाधर्म्यात् साध्यसाधनभावमाश्रित्य प्रवर्तते। यत्रैतदस्ति तत्रोपमानं न शक्यते प्रतिषेद्धुमिति।

---

[1] प्रायिकसादृश्यविवक्षायां अनडुन्महिषयोरपि तस्य विद्यमानत्वेन 'यथानड्वान् तथा महिष' इत्यपि स्यात्। गोमहिषयोः सादृश्यस्य विद्यमानत्वेन महिषस्यापि गवयशब्दवाच्यताप्रसङ्गः।

प्रायःशब्दः किञ्चिन्न्यूनतामभिधत्ते । अत्यन्तसाधर्म्यादुपमानमस्ति । यत्र तत्क्रियथैव तत्क्रियोपमीयते । यथा "रामरावणयोर्युद्धं रामरावणयोरिव" । यत्रानडुहो बलप्रकर्षजिज्ञासा भवति ; तत्र प्रायः साधर्म्येण यथा महिषस्तथानड्वान् इति । यदा तु सन्मात्रं जिज्ञासितं भवति तदा सर्वेण सर्वस्योपमानं भवति । यथा मेरोः सत्ता तथा सर्षपस्येति ; तस्मादप्रतिषेधः ॥ ४५ ॥

[उपमानस्वरूपविमर्शः]

अस्तु तर्ह्युपमानमनुमानम्—

प्रत्यक्षेणाप्रत्यक्षसिद्धेः । ४६ ॥

यथा धूमेन प्रत्यक्षेण अप्रत्यक्षस्याग्नेर्ग्रहणं अनुमानमेवं गवा प्रत्यक्षेणाऽप्रत्यक्षस्य गवयस्य प्रतिपत्तिरिति नेदमनुमानात् विशिष्यत इति ॥ ४६ ॥

तस्यापरिज्ञानात् न भवतोपमानलक्षणं व्यज्ञायि—

नाप्रत्यक्षे गवये प्रमाणार्थं उपमानस्य पश्यामः ॥ ४७ ॥

क उपमानार्थः ? अप्रत्यक्षेऽपि गवये या संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरिति प्रोक्तमेव नैवमनुमानमिति । पूर्वपक्ष्याह—परार्थमुपमानमिति चेत् न स्वयमप्यध्यवसायात् । अनुमानं स्वार्थं परार्थं च । उपमानं परार्थमेवातोऽनुमानभिन्नमुपमानमिति चेन्मन्यसे ; तन्न स्ति । कुतः ? स्वयमप्यध्यवसायं जनयेत् । यावतैव तद्वाक्यमुच्चारयितुरध्यवसायं जनयति तस्मात्स्वार्थमपीत्यनुमानमेवेति[1] ॥ ४७ ॥

---

[1] इतः परं बहून्यक्षराणि मूलकोशे त्रुटितानि ।

तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८ ॥

प्रतिपत्तिभेदाच्च नानुमानमेवं भवति यथा धूमस्तथाग्निरिति । अस्ति तूपमाने यथा गौरेवं गवय इति ॥ ४८ ॥

[शब्दपरीक्षाप्रकरणम्]

[1]शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥

['शब्दोऽनुमानं' अनुमानमेव ; न प्रमाणान्तरमित्यर्थः । कुतः ? प्रत्यक्षतोऽनुपलब्धेः शब्दार्थस्यानुमेयत्वात् । यथा चानुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चान्मीयत इत्यनुमानं तथैव मितेन शब्देनार्थोऽनुपलभ्यमानः पश्चान्मीयत इत्यनुमानं शब्द इत्यर्थः] ॥ ४९ ॥

उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥

[प्रमाणान्तरभावे द्विप्रवृत्तिरुपलब्धिः । अन्यथा ह्युपलब्धिरनुमाने अन्यथोपमाने इति तद्व्याख्यातम् । शब्दानुमानयोरुपलब्धिरद्विप्रवृत्तिः यथानुमाने प्रवर्तते तथा शब्देऽपीति, शब्दो विशेषाभावादनुमानमेव] ॥ ५० ॥

सम्बन्धाच्च ॥ ५१ ॥

शब्दोऽनुमानमिति वर्तते । लिङ्गलिङ्गिव[2]च्छब्दार्थयोः संबन्धादिति सूत्रार्थः ॥ ५१ ॥

---

[1] अनवधानाद्वा लेखकप्रमादाद्वा "शब्दोऽनुमानं" "उपलब्धे" रिति सूत्रद्वयव्याख्यानं नोपलभ्यते । अतोऽत्र भाष्यादिप्रदर्शितमार्गानुसारेण विवरणं कृतम् ।

[2] शब्दार्थयोः

यत्तावदर्थस्यानुमेयत्वादिति ; तन्न

[1]आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः ॥ ५२ ॥

स्वर्गादेरप्रत्यक्षस्य न शब्दमात्रात् सम्प्रत्ययः । किं तर्हि [2]आप्तैरयं प्रयुक्त इत्यतः सम्प्रत्ययः । विपर्यये सम्प्रत्ययस्याभावात् । न

---

[1] सूत्रकारेण शब्दस्यानुमानान्तर्गतिरेव प्रदर्शिता । स्यादिदं यदि शब्दः प्रमाणं स्यात् । न च तद्युज्यते । तथा हि न शब्दः प्रमाणम् तदभावेऽपि प्रमाजननात् । यस्मित् सति प्रमा नियमेन भवत्येव तत्प्रमाणम् । शब्दे सत्यपि तच्छ्रवणात्प्राक् प्रमा न जायते ।

प्रामाण्यं च विषयवत्तया व्याप्तम् । द्विविधश्च विषयः । प्रत्यक्षः अप्रत्यक्षश्चेति । आद्यः प्रत्यक्षविषयः । द्वितीयस्त्वनुमानवेद्यः । तथा च विषयवत्ता शब्दान्निवर्तमाना व्याप्यं प्रामाण्यमपि ततो निवर्तयति । तथा च प्रत्यक्षानुमानाभ्यां भिन्नः शब्दो न प्रमाणमिति पूर्वपक्षिते इदमाह– आप्तोपदेशेति ।

[2] आप्तैरयमिति । शब्दसामान्यस्य येनकेनचिद्यथाकथञ्चिदुच्चरितस्य न प्रमाजनकत्वमपि तु आप्तोच्चरितस्यैव । न हि प्रत्यक्ष इव शब्दोऽगृहीतसङ्गतेरर्थप्रत्यायको भवति । अपि तु गृहीतसङ्गतिरेव तथा । "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इत्यादौ स्वर्गाद्यर्थे वाक्यार्थरूपेऽगृहीतसङ्गतेरर्थप्रतिभासो दुःशक एव । न चात्रास्ति गमकं किमपि लिङ्गम् । न चागृहीते सम्बन्धिनि सम्बन्धः शक्यग्रहः । येनोक्तमर्थं अनुमानेन प्रतीमः । तस्मान्नानुमानमत्र गमकम् । तथा चात्र शब्देनैव प्रतिपत्तिरिति भिद्यतेऽनु-

त्वेवमनुमानमिति । यत्पुनरेतदुपलब्धेरद्विप्रवृत्तित्वादिति ; अयमेव शब्दानुमानयोरुपलब्धेः प्रवृत्तिभेदः । तत्र विशेषे सत्यहेतुः विशेषाभावादिति ।

यत्पुनरिदं सम्बन्धाच्चेति अस्तिशब्दार्थयोः संबन्धोऽनुज्ञातः । अस्ति च प्रतिषिद्धः । अस्य शब्दस्य इदं वाच्यमिति वाच्यस्यार्थविशेषोऽनुज्ञातः । [1]प्राप्तिलक्षणश्च प्रतिषिद्धः । कस्मात् ? [2]प्रमाणतोऽनुपलब्धेः । प्रत्यक्षतस्तावत् शब्दार्थप्राप्तेर्नोपलब्धिः ; अतीन्द्रियत्वात् । येनेन्द्रियेण शब्दो गृह्यते न तेन [3]तस्यार्थो गृह्यते । अतस्तत्प्राप्तिरपि तस्याविषयेति ॥ ५२ ॥

अथ खल्वयम्—

**पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः ॥ ५३ ॥**

स्थानकारणताभावादिति चार्थः । आस्यैकदेशे स्थानकरणोच्चा-

---

मानाच्छब्दः । द्वितीयदूषणं निराचष्टे—यत्पुनरेतदित्यादिना । विशेषे= भेदके । तृतीयं निराह—यत्पुनरित्यादिना ।

[1] शब्दार्थयोः स्वभाविके संबन्धे वाच्यमाने त्रेधा गतिः—तादात्म्यं वा प्रत्याय्यप्रत्यायकभावो वा प्राप्तिलक्षणो वात्र स्यात् । तत्र प्रत्यक्षलक्षणस्थनाव्यपदेश्यपदेनैव प्रथमो निराकृतः । मीमांसकाभिमतः औत्पत्तिकःसंबन्धः उत्तरत्र निराचिकीर्षितः । तस्मादत्र प्राप्तिलक्षणः संबन्धः प्रतिषिद्धः ।

[2] प्रमादादत्र मूलकोशे इदं वाक्यं सूत्रत्वेन निर्दिष्टमासीत् । व्याख्यानादिपरम्पराविरुद्धत्वात्परित्यक्तम् ।

[3] तस्यार्थः=अतीन्द्रियरूपः ।

रणीयः शब्दस्तदन्तिकेऽर्थे इति अन्न-अग्नि असिशब्दोच्चारणे पूरण-प्रदाह-पाटनानि प्रसज्येरन् । न च प्रगृह्यन्ते । तदग्रहणान्नानुमेयः प्राप्ति-लक्षणः संबन्ध इति ॥ ५३ ॥

पूर्वपक्षवाद्याह—

शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४ ॥

शब्दार्थप्रत्ययस्य व्यवस्थादर्शनात् अनुमीयते ; अस्ति शब्दार्थ-संबन्धो व्यवस्थाकारणम् । असंबन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गः । तस्मादप्रतिषेधः संबन्धस्येति ॥ ५४ ॥

अत्रायं समाधिः—

न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥ ५५ ॥

[1]न संबन्धकारितं शब्दार्थव्यवस्थानम् । किं तर्हि ? समय-कारितम् । कः पुनरयं समयः ? अस्य शब्दस्य इदमभिधेयमिति अभि-धानाभिधेयनियमः । तस्मिन्नुपयुक्ते शब्दार्थसंप्रत्ययो व्यवतिष्ठते । संबन्ध-वादिनामपि चायमवर्जनीय इति ॥ ५५ ॥

जातिविशेषे चानियमात् ॥ ५६ ॥

सामयिकः शब्दादर्थसम्प्रत्ययः ; न स्वाभाविकः । [2]ऋष्यार्य-

---

[1] नाद्यसंबन्ध इति मूलकोशे

[2] 'यव' शब्दो ह्यार्यैः दीर्घशूके प्रयुज्यते । म्लेछास्तु तमेव प्रियङ्गौ प्रयुञ्जते । एवं त्रिवृतशब्दमपयः स्वोतीयानवके प्रयुञ्जते ।

म्लेच्छानां यथाकामं शब्दविनियोगो अर्थप्रत्यायनाय भवति । स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात् । यथादित्यप्रकाशस्य रूपप्रत्ययहेतुत्वं जातिविशेषं न व्यभिचरति । जातिविशेषशब्देन पुनर्देशविशेषेऽभिधीयते ॥ ५६ ॥

[शब्दविशेषप्रामाण्यचिन्ता]

तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५७ ॥

तदित्यधिकृतशब्दाभिधानाच्छब्दविशेषाधिकारः — यस्मात्प्रकरणेन प्राप्तमपि शब्दं तच्छब्देनाभिधत्ते पुनः तज्ज्ञापयति शब्दविशेषं प्रतीयं चिन्ता न तु शब्दमात्रम् । तदप्रामाण्यं अर्थस्याप्रत्यायकत्वम् । अनृतत्वमन्यथार्थाभिधानम् । व्याघातः पदयोर्वाक्ययोर्वा सहासंभवः । पुनरुक्तं पूर्वाभिहिताभिधानम् । पुत्रकामेनेष्टौ संस्थितायां न पुत्रजन्म दृश्यते । दृष्टार्थस्य वाक्यस्य अनृतत्वात् अदृष्टार्थमपि "अग्निहोत्रं जुहुयात स्वर्गकाम" इत्यादिवाक्यमनृतमिति ज्ञायते । विहितव्याघातदोषाच्च हवने "[1]उदिते

---

आर्यास्तु लताविशेषे । न चैतत्संभवति शब्दार्थयोः स्वाभाविके संबन्धे । तस्मात्सामयिक एव शब्दार्थयोस्संबन्धः ।

[1] अयं सङ्ग्रहः—

रेखामात्रोदिते सूर्ये रश्मिभिः परिदृश्यते ।
उदितं तं विजानीयात् तत्र होमं प्रकल्पयेत् ॥
रात्रेः षोडशमे भागे ग्रहनक्षत्रभूषिते ।
अनुदितं तं विजानीयात्तत्र होमं प्रकल्पयेत् ॥

होतव्यमनुदिते होतव्य समयाध्युषिते होतव्यम्'' इति विधाय विहितं व्याहन्ति। ''श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति। शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति। [1]श्यामशबलावस्याहुतिमभ्यवहरतः यः समयाध्युषिते जुहोति। व्याघाताच्चान्यतरन्मिथ्येति। पुनरुक्तिदोषाच्चाभ्यासे चोद्यमाने त्रिःप्रथमामन्वाह त्रिरुत्तमाम्'' इति पुनरुक्तदोषः। प्रमत्तवाक्यवदिदमपि न मानम् ॥ ५७ ॥

कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥

यत्तावदनृतत्वादप्रमाणं वेद इति। तदत्र विचारणीयम्। किं फलादर्शनं वाक्यानामप्रमाणत्वादाहोस्वित् कर्मकर्तृसाधनवैगुण्यादिति। वयं तु ब्रूमः—कर्मकर्तृसाधनवैगुण्यादिति। फलादर्शनात्तु कारणानामसामर्थ्यं गम्यते। तत्र कर्मवैगुण्यं [2]समीहाभ्रेषः। कर्तृवैगुण्यमविद्वान् प्रयोक्ता [3]कपूयाचरणश्च। साधनवैगुण्यं हवि[4]रसंस्कृतं [5]उपहतमिति।

---

प्रभातसमये जाते नष्टे नक्षत्रमण्डले।
रविर्यावन्न दृश्येत समयाध्युषितं विदुः॥

[1] श्यामशबलाविति।

श्वानौ द्वौ श्यावशबलौ वैवस्वतकुलोद्भवौ।
ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ॥
(वायुपुराणे १३८/३१) इत्यादि बलिमन्त्रोऽत्रानुसन्धेयः।

[2] समीहाभ्रेषः=यज्ञाङ्गकर्मणो सम्यगननुष्ठानम्।

[3] कपूयाचरणः='कपूयं' निन्दितं कर्म। तदाचरतीत्यतः कपूयाचरणः।

गुणयोगेन फलनिष्पत्तिदर्शनात् न चेदं [1]लौकिकाद्भिद्यते "पुत्रेष्ट्या पुत्रकामः यजेते"ति ॥ ५८ ॥

अथ न व्याघात इत्याह—

अभ्युपेत्य कालभेदे दोषवचनात्[2] ॥ ५९ ॥

योऽभ्युपगतं हवनकालं भिनत्ति। ततोऽन्यत्र जुहोति। तत्रायमभ्युपगतकालभेदे दोष उच्यते। श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोतीति इदं वाक्यं विधिभ्रेषे निन्दावचनम् ॥ ५९ ॥

अनुवादोपपत्तेश्च ॥ ६० ॥

न पुनरुक्तदोषेऽभ्यास इति प्रकृतम्। अनर्थकोऽभ्यासः पुनरुक्तदोषमावहति। अर्थवानेवाभ्यासोऽनुवादः। सोऽयमभ्यासः त्रिःप्रथमामन्वाह त्रिरुत्तमाम् इत्यनुवाद उपपद्यते अर्थवत्त्वात्। त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामिधेनीनां भवति ॥ ६० ॥

---

[4] असंस्कृतम्=अपूतम्

[5] उपहतम्। श्वादिभिरिति शेषः।

[1] यथा लोकेऽपि कर्त्रादिवैगुण्यवशादसंपन्नं अग्निजननरूपं कर्म— "अग्निकामो दारुणी मथ्नीयात्" इति विधिवाक्यप्रामाण्यघातकं न भवति, तद्वत् कर्तृकर्मादिवैगुण्येन संपद्यमानं कर्म पुत्रकामेष्ट्यामपि फलाजनकमिति न विधिवाक्यप्रामाण्यं निहन्तीति भावः।

[2] न व्याघातदोष इत्यवधेयम्।

वाक्यविभागस्य चार्थग्रहणात् ॥ ६१ ॥

मन्त्रादिवाक्यवत्समस्तानि वेदवाक्यानि अर्थविभागवन्ति । तस्मात्प्रमाणम् ॥ ६१ ॥

विभागश्च ब्राह्मणवाक्यानां त्रिविधः—

विध्यर्थवादानुवादवचनविनियोगात् ॥ ६२ ॥

विधिवचनान्यर्थवादवचनान्यनुवादवचनानीति त्रिधा खलु वेदवाक्यानि[1] ॥ ६२ ॥

तत्र तावत्—

विधिर्विधायकः ॥ ६३ ॥

यद्वाक्यं विधायकं देशकं स विधिः । विधिस्तु नियोगोऽनुज्ञा वा । यद्वाक्यं विधत्ते इदं कुर्यादिति स नियोगः । यत्र कर्तारमनुजानाति तदनुज्ञावाक्यम् । तद्यथाग्निहोत्रवाक्यमेवैतत् साधनावाप्तिपूर्वकंरमनुजानाति ॥ ६३ ॥

स्तुतिर्निन्दा परकृतिः पुराकल्पः इत्यर्थवादः ॥ ६४ ॥

विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः । [2]सर्वजिता वै

---

[1] ब्राह्मणं त्रिविधं प्रोक्तं प्रथमं विधिसंज्ञकम् ।
अर्थवादात्मकं मध्यं अनुवादस्तृतीयकम् ॥
इति पराशरमाधवीये ।

[2] सर्वजिता वै इति । एवमत्र ताण्ड्यब्राह्मणपाठः—"सर्वजिता

देवा सर्वमयजन् इत्यादि । अनिष्टफलवादो निन्दा । "स एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेन यज्ञेनाऽनिष्ट्वाऽन्येन यजते गर्तपत्यमेवैतज्जीर्यते वा" इत्यादि । अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः । "हुत्वा वपामेवाग्रेऽभिघारयति अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयति अग्नेः प्राणाः पृषदाज्यस्तोममित्येवमभिदधतीत्येवमादि । ऐतिह्यसमाचरितो विधिः पुराकल्पः । तस्माद्वा एतेन ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन् । कथं परकृतिपुराकल्पावर्थवादाविति ? स्तुतिनिन्दावाक्येनाभिसंबन्धात् विध्याश्रयस्य कस्यचिदर्थस्य द्योतनादर्थवाद इति ॥ ६४ ॥

विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥

विध्यनुवचनं चानुवादो विहितानुवचनं च । पूर्वः शब्दानुवादः । अपरोऽर्थानुवादः । यथा पुनरुक्तं द्विविधं एवमनुवादोऽपि । शब्दपुनरुक्तं अर्थपुनरुक्तं चेति । तत्राद्यो यथा "अनित्योऽनित्य" इति । अर्थपुनरुक्तमनित्यो निरोधधर्मक इति ॥ ६५ ॥

नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥ ६६ ॥

पुनरुक्तमसाधु ; साधुरनुवाद इत्ययं विशेषो नोपपद्यते । कस्मात् ? उभयत्रापि प्रतीतार्थः शब्दोऽभ्यस्यते इत्युभयमसाध्विति ॥ ६६ ॥

---

वै देवा सर्वमयजन् सर्वस्याप्त्यै सर्वस्यजित्यै सर्वमेवैतेनाप्नोति सर्वं जयति" इति ।

शीघ्रतरगमनोपदेशवदभ्यासात् नाविशेषः ॥ ६७ ॥

शीघ्रतरगमनोपदेशवत् शीघ्रं शीघ्रं गम्यतां शीघ्रतरं गम्यतां इति [1]क्रियातिशयोऽभ्यासेनैवोच्यते। एवमनुवादोऽर्थविशेषेणास्ति; पुनरुक्ते तु न कश्चित् विशेषो गम्यत इति महान्विशेषः पुनरुक्तानुवादयोः ॥ ६७ ॥

किं पुनः प्रतिषेधहेतुत्वोद्धारादेव प्रमाणता वेदवाक्यानां सिद्धा? न। किन्तर्हि—

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६८ ॥

चशब्दः पूर्वहेत्वनुकर्षणार्थः। यथा मन्त्रायुर्वेदवाक्यानि पुरुषविशेषाभिहितत्वात्प्रमाणं तथा वेदवाक्यानीति। किं पुनराप्तानां प्रमाणत्वं साक्षात्कृतधर्मता भूतदया, यथाभूतार्थचिख्यापयिषा चेति। प्रयोगस्तु— प्रमाणं वेदवाक्यानि वक्तृविशेषाभिहितत्वात् मन्त्रायुर्वेदवाक्यवदिति। न चाऽसिद्धो हेतुरिति वक्तव्यम्[2]। वेदवाक्यान्यपि पौरुषेयाणि वाक्यत्वात् लौकिकवाक्यवदित्यनुमानेन हेतोः सिद्धत्वात्[3] ॥ ६८ ॥

इति द्वितीयेऽध्याये आद्यमाह्निकम्।

---

[1] क्रियाविषयो मू. को.

[2] वेदाः प्रमाणं नित्यत्वादपौरुषेयत्वात् इत्यादिहेतुना वेदस्य प्रामाण्यं साध्यते नाप्तोक्तत्वादिनेति वक्तृविशेषाभिहितत्वादित्यसिद्धो हेतुरिति शङ्कितुरभिप्रायः।

[3] इतः परं त्रुटितमेकं वाक्यं दृश्यते। तस्यानुपूर्वी एवं संभाव्यते- अनित्यत्वे नानित्यत्वात्प्रमाणत्वं किं तर्हि प्रतिपादकत्वाद्दीपवत्।

## द्वितीयाध्यायस्य द्वितीयमाह्निकम्

[प्रमाणचतुष्ट्वपरीक्षाप्रकरणम् ]

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रम् । तस्याक्षेपः—

**न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ॥ १ ॥**

अयथार्थोऽयं प्रमाणोद्देशः । न हि चत्वार्येव प्रमाणानि । [1]ऐतिह्यादीन्यपि प्रमाणानीति । [2]अनिर्दिष्टवक्तृकं प्रवादपारम्पर्यम् ऐतिह्यम् । यस्मिन् वाक्येऽभिधीयमानादर्थादन्योऽर्थः प्रतिपाद्यते सोऽर्थापत्तिः । यथाऽसत्सु मेघेषु वृष्टिर्न भवति । किमत्रापाद्यते ? सत्सु भवतीति । संभवो नाम अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम् । यथा द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणं तस्मात्प्रस्थस्येति । अभावः प्रत्यनीकस्य ग्रहणाद्विरोधिनो ग्रहणम् । यथा विघारके वाय्वभ्रसंयोगे सति गुरुत्वप्रतिबन्धात् [3]अपां पातः प्रतिषिद्धः । तदपामपातेन विरोधिनं वाय्वभ्रसंयोगं [4]प्रतिपद्यते इति ॥ १ ॥

---

[1] प्रत्यक्षानुमानोपमानशब्दार्थापत्तयः पञ्च प्रमाणानीति प्राभाकराः । तैस्सहानुपलब्धिरपीति षडिति भाट्टाः ।

[2] अनिर्दिष्टेति । यथा इह वटे यक्षस्तिष्ठतीति । आप्तोक्त्य दिनिश्चयाभावेऽपि तत्र प्रामाण्यं विद्यत इत्यर्थः । अत्र यक्षप्रत्यक्षाभावात् व्याप्तिग्रहाभावाच्च न प्रत्यक्षानुमानयोरन्तर्भावः । आप्तोक्त्यनिश्चयादेव न शब्देऽपीति तस्य पृथक्प्रामाण्यमङ्गीकरणीयमित्यर्थः ।

[3] × × × ×

[4] × × पद्यसे

सत्यम्; एतानि प्रमाणानि; न प्रमाणान्तराणीत्याह—

शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥

अनुपपन्नः प्रतिषेधः। [1]अर्थापत्तिसम्भवाभावानामनुमानेऽन्तर्भावः संभवति। तथा हि प्रत्यक्षेण ह्यप्रत्यक्षस्य संबन्धस्य प्रतिपत्तिरनुमानम्। तथा चार्थापत्तिसंभवाभावा इति। एतेषामुदाहरणेषु [2]शब्द ऐतिह्यमन्तर्भवति। तदेवमन्तर्भावान्न पृथगुपदेशः ॥ २ ॥

ननु अर्थापत्तेः प्रमाणत्वेनाभ्यनुज्ञा नोपपद्यते तथा हीयम्:—

अर्थापत्तिरप्रमाणं अनैकान्तिकत्वात् ॥ ३ ॥

[3]असत्सु मेघेषु वृष्टिर्न भवतीत्यर्थापत्तिः। सा चानैकान्तिकी।

---

[1] दिवाऽभुञ्जानो देवदत्तः पीन इत्युक्तौ रात्रिभोजनं गम्यते एव। ततश्च देवदत्तः रात्रिभोजनवान् दिवाभुञ्जानत्वे सति पीनत्वात् इत्युक्तं भवति। ततश्चानुमान एवान्तर्भावः। एवं संभवाभावयोरपि व्याप्तिमूलकत्वादेवानुमानेऽन्तर्भावः।

[2] अर्थापत्तिरिति। ऐतिह्यस्य तु शब्देऽन्तर्भावः। न चाप्तोक्त्यनिश्चयः। आप्तोक्तत्वानवधारणेऽपि अनाप्तोक्तत्वानिश्चयात्। सामान्यत आप्तोक्तत्वनिश्चयसंभवाच्च। यद्यपि आप्तोक्तत्वमेव न शब्दे कारणम्। आकाङ्क्षादिज्ञानस्य योग्यताप्रमायाश्च शाब्दप्रमाहेतुत्वात्।

[3] आस्तां तावदियमर्थापत्तेरनुमानान्तर्भावचिन्ता। ततः प्रामाण्यमेव दुःशकमित्याह—नन्विति।

सत्स्वपि मेघेषु एकदा वृष्टिर्न भवतीति। अर्थापत्तिमात्रस्य पक्षीकरणे तावदनैकान्तिकत्वमथ्यापकम्। अथानैकान्तिकी या सा पक्षीक्रियते; अभ्युपगच्छामो वयमप्यनैकान्तिक्यप्रमाणमिति। न ह्यसौ साक्षादर्थापत्तिरिति ॥ ३ ॥

अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥

सत्सु मेघेषु वृष्टिस्तु भवतीति कारणप्रतिबन्धोऽसौ न तदर्थापत्तेः प्रमेयं, किन्त्वस्याः प्रमेयं सति कारणे कार्यं भवतीति। सेयं कथमनैकान्तिकी? यद्यसत्यपि कारणे कार्यमुत्पद्यते। तत्तु न दृष्टमिति न क्वचिदप्यनैकान्तिकत्वम्।

प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥

योऽयं भवता प्रतिषेधः क्रियते अर्थापत्तिर्न प्रमाणमनैकान्तिकत्वात् इति; अयमप्यनैकान्तिकः सत्ताऽप्रतिषेधात्। नानेन प्रतिषेधेनार्थापत्तेः सत्ता प्रतिषिध्यते। कथं? न सत्ताप्रतिषेधः, अर्थापत्तिविशेषो ह्यत्र प्रतिषिध्यते। नार्थापत्तिमात्रं, तेन सत्ताप्रतिषेधादनैकान्तिकता भवति ॥ ५ ॥

अथ मन्यसे न प्रतिषेधस्य सत्वं विषयः किं तर्हि प्रमाणत्वं; सोऽयं प्रतिषेधः स्वविषये प्रवर्तमानो नानैकान्तिको भवितुमर्हतीति—

[1]तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥

[2]अर्थापत्तिरपि स्वविषये वर्तमाना प्रमाणं भवितुमर्हतीति ॥ ६ ॥

---

[1] तदिति सिद्धान्तसूत्रम्। तदिति प्रतिषेधं परामृशति।

[2] अर्थापत्त्यापि

नाभाव[1]प्रामाण्यं प्रमेयाऽसिद्धेः ॥ ७ ॥

यदविषयं तदप्रमाणम् । यथा गोशब्दोऽश्वप्रतिपादने, तथा चाभावः तस्मादप्रमाणमिति[2] । कश्चैवमाहाभावः प्रमाणमिति । अपि तु अभावविषया [3]प्रतिपत्तिः प्रमाणम् ॥ ७ ॥

तत्रानेकधा भिन्नस्य भावप्रपञ्चस्योदाहरणार्थं सूत्रम्—

लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः ॥ ८ ॥

अलक्षितानि वासांस्यानयेति प्रयुक्तः पुरुष उभयसन्निधौ येषु वा सत्सु लक्षणानि न पश्यति तानि लक्षणाभावेन प्रतिपद्यते । प्रेषणसम्प्रतिपत्त्यं रेऽविषयत्वात् । प्रतिपद्य चानयति । प्रतिपत्तिहेतुश्च प्रमाणम् । ततश्च तस्याभावस्य सिध्यति प्रमेयम्[4] ॥ ८ ॥

असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥

यत्र भूत्वा किञ्चिन्न भवति तत्र तस्याभाव उपपद्यते । अलक्षितेषु वासस्सु न लक्षणानि भूत्वा भवन्ति तेन तेषु लक्षणाभावोऽनुपपन्न इति । नान्यलक्षणोपपत्तेः यथायमन्येषु वासस्सु लक्षणोपपत्तिं पश्यति नैवमलक्षितेषु । सोऽयं लक्षणानामभावं पश्यन्नभावेनार्थं प्रतिपद्यत इति ॥ ९ ॥

---

[1] प्रमाणं

[2] तथा चाभावः प्रमाणं विषयाभावादित्युक्तं भवति ।

[3] प्रतिपत्तिः प्रमाणमिति । तथा प्रमीयत इति योज्यम् । कःपुनरभावस्य विषयः? भाव इत्युक्तं प्राक् ।

[4] प्रमाणं इति मूलकोशे

अत्र पूर्वपक्षवाद्याह—

तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥

लक्षितेषु यानि च विद्यन्ते लक्षणानि तानि न कस्यचिन्न सन्तीति यानि खलु भवन्ति तेषामभावो[1]ऽव्याहत इति ॥ १० ॥

अत्र समाधिः—

न लक्षणा वास्थितापेक्षसिद्धेः ॥ ११ ॥

न ब्रूमो यानि यत्र भवन्ति तेषां तत्रैवाभाव इति किन्तु केषुचिल्लक्षणान्यवस्थितान्यपेक्ष्य [2]येषु तानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यन्त इति ॥ ११ ॥

प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

अभावद्वैविध्यं खलु भवति प्रागुत्पत्तेरविद्यमानता ऊर्ध्वं च विनाशादविद्यमानतेति । तत्र योऽयं विनाशादभावो लक्षणानामलक्षितेषु वासस्तु वा[3] — — — — ॥ १२ ॥

[शब्दानित्यताप्रकरणम्]

आप्तोपदेशः शब्द इति शब्दस्य प्रमाणभावे विशेषणं ब्रुवता नाना-

---

[1] अव्याहत

[2] येषुघन

[3] इतः परं मूलकोशे व्याख्या न दृश्यते ।

प्रकारः शब्द इति ज्ञाप्यते । तत्सामान्येन विचारः । किं नित्योऽथानित्य इति ।

विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः । आकाशगुणः शब्दः तद्गतमहत्ववन्नित्योऽभिव्यक्तिधर्मक इत्येके । गन्धादिसहवर्तिद्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्म इत्यपरे ।

आकाशगुणः शब्दः उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे । महाभूतसङ्क्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये । अतः संशयः किमत्र तत्त्वमिति ? अनित्यः शब्द इत्युत्तरम्—

आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च ॥ १३ ॥

संयोगविभागकारणको हि शब्द इति सांशयिकमेतत् । किमुत्पत्तिकारणं संयोगविभागौ शब्दस्याहोस्वित् अभिव्यक्तिकारणं इत्यत आह— ऐन्द्रियकत्वात् इति । सामान्यवत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादित्यर्थः । ततः किं ? यदिन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः ततो न व्यज्यते । न व्यज्यमानस्येन्द्रियेण प्रत्यासत्तियुक्ता । कथमिति ? श्रोत्रं तावत् शब्ददेशं न गच्छति तस्याकाशप्रकृतिकत्वादाकाशस्य च अमूर्तत्वात् गमनानुपपत्तेः । शब्दोऽपि न गच्छति निष्क्रियत्वादेव । न चाप्राप्तस्य ग्रहणमस्ति । सर्वशब्दोपलब्धिप्रसङ्गात् । पारिशेष्याच्छब्दसन्तानसिद्धिः । एवं सन्तानेनैन्द्रियकत्वादनित्य इति ।

अथ मन्यसे एक एवायं शब्दो वितत्याकाशमवतिष्ठते ; स व्यवस्थितसंयोगविभागाभ्यां व्यक्तस्सन्नुपलभ्यते इति । तच्च न, सर्वोपलब्धिप्रसङ्गात् ।

इतश्चोत्पद्यते—कृतकवदुपचारात् । कृतकवदुपचर्यते, तीव्रं मन्द्र-मिति, तीव्रं सुखं मन्द्रं दुःखमिति चोपचर्यते । तीव्रः शब्दो मन्द्रः शब्द इति । अस्य प्रयोगः—अनित्यः शब्दः तीव्रमन्द्रविषयत्वात् सुखदुःख-वदिति ।

अथ मन्यसे संयोगस्य व्यञ्जकस्य [1]तीव्रमन्द्रतया शब्दग्रहणस्य[2] तीव्र-मन्द्रता भवति । न शब्दो भिद्यते । यथा प्रकाशस्य तीव्रमन्द्रतया रूपग्रहणस्येति, तच्च नैवम्, अभिभवोपपत्तेः । [3]तीव्रो भेरीशब्दः मन्द्रं तन्त्रीस्वनमभिभवति, न मन्दः । न च शब्दग्रहणयोरभिभाव्याभिभावक-भावः तयोर्युगपदसम्भवात् । [4]तस्मादुत्पद्यते शब्दः, नाभिव्यज्यत इति ॥ १३ ॥

[यथाश्रुते हेतूनां व्यभिचारशङ्कनम्]

**न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥ १४ ॥**

[5]अस्य सूत्रस्य पूर्वहेतूनामनैकान्तिकत्वज्ञापनमर्थः । न खल्वादि-

---

[1] × × × × ×

[2] × × × × ×

[3] × × × × ×

[4] तस्मादिति । भिद्यमाने तु शब्दे स्यादभिभवः । न चैवं, तस्मादुत्पद्यत एव शब्दः नाभिभवतीत्यर्थः ।

[5] एतत्सूत्रप्रतिपाद्यप्रमेयं पूर्वोक्तहेतुत्रयानैकान्तिकत्वज्ञापनरूपं निरूप-यितुमाह—अस्येति ।

मत्त्वादनित्यः शब्दः, व्यभिचारात् । आदिमतः खलु[1] घटप्रध्वंसाभावस्य नित्यत्वं दृष्टम् । ऐन्द्रियकत्वादित्येतदपि व्यभिचरति । [2]ऐन्द्रियकं सामान्यं नित्यं चेति । यदपि कृतकवदुपचारादिति तदपि व्यभिचरति नित्येष्वप्यनित्यवदुपचारो दृष्टः । [3]आकाशस्य प्रदेशः, आत्मनः प्रदेश इति ॥ १४ ॥

[प्रथमे हेतौ व्यभिचारपरिहारः]

तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः ॥ १५ ॥

नित्यमित्यत्र किं तावत्तत्त्वम्? उभयान्तापरिच्छिन्नवस्तुसत्तासंबन्धो नित्यता । तद्विपर्ययादनित्यता । एतच्चाभावे नास्ति । तेन भाक्तं तु नित्यत्वं तत्र भवितुमर्हति ।

का पुनरियं भक्तिः? प्रागभावस्य कारणाऽभावः प्रध्वंसाभावस्य विनाशाभावः । सामान्यं, नित्य इव नित्यो घटाभाव इति न पुनर्नित्य एवेति ॥ १५ ॥

---

[1] लु कपालादिभागजातस्य घ—मूलकोशे

[2] ऐन्द्रियकमिति । येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनैवेन्द्रियेण तन्निष्ठा जातिः, तदभावश्च गृह्येते इति न्यायात् बहिरिन्द्रियग्राह्यव्यक्तिनिष्ठ-जातेरपि तत्तद्योग्येन्द्रियग्राह्यत्वात् व्यभिचारः ।

[3] आत्मनः प्रदेश इति । आत्मनः प्रदेश इत्यत्र यथा निरव-च्छिन्ने प्रदेशरहिते आत्मनि प्रदेशोक्तिर्नित्यस्यानित्यत्वं गौणं व्यनक्ति, तथैव नित्येऽपि शब्दे अनित्यत्वोक्तिरिति ध्येयम् ।

[द्वितीये व्यभिचारोद्धारः]

यदपि सामान्यनित्यत्वादिति इन्द्रियप्रत्यासत्तिग्राह्यत्वादिति—

सन्तानानुमानाविशेषणात् ॥ १६ ॥

अव्यभिचार इति प्रकृतम् । न वयमैन्द्रियकत्वादित्यनेन शब्दानित्यत्वं साधयामः । अपि तु नित्यत्वे शब्दस्याभिव्यक्तिं प्रतिषेधामः । न हि व्यज्यमानस्य शब्दस्यैन्द्रियकत्वं युक्तमित्युक्तं पुरस्तात् । तेनेन्द्रियप्रत्यासत्तिग्राह्यत्वा[1]त्सन्तानानुमानं, तेनानित्यत्वमिति ॥ १६ ॥

[तृतीये व्यभिचारोद्धारः]

यदपि मन्येत नित्येष्वप्यनित्यवदुपचारादिति ; तदपि—

कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् ॥ १७ ॥

नित्येष्वप्यव्यभिचार इति । न हि नित्यानां द्रव्याणाम् आकाशात्मादीनां प्रदेशशब्देन कारणमुच्यते यथा कृतकस्य । किमिति नोच्यते? अविद्यमानत्वात् । अविद्यमानत्वं च प्रमाणतोऽनु[2]पलब्धेः । [3]यद्याकाशं

---

[1] सन्तानेति । सन्तानस्य—सन्ततेः । वीचीतरङ्गन्यायेन शब्दोत्पत्तेः अनुमानम् अनुमितिः क्रियत इत्यर्थः । तथा चानुमितेन सन्तानेनानित्यत्वं शब्दस्य साध्यमित्यर्थः ।

[2] अनुपलब्धेरिति । यद्याकाशस्य प्रदेशास्स्युस्तर्ह्युपलभ्येरन् ; प्रमाणतो नोपलभ्यन्ते, तस्मान्नाकाशः प्रदेशवान् ।

[3] अथाकाशस्य निष्प्रदेशत्वाभ्युपगमे कथं न लोकविरोध इत्याक्षिपति—यद्याकाशमिति ।

निष्प्रदेशं प्रतिपद्यसे, ननु लोको विरुध्यते, पूर्वभागेन व्याप्त आदित्य इति। न, अन्यथा तदुपपत्तेः—संयोगस्याव्याप्यवृत्तित्वे प्रदेशशब्देनाभिधीयमाने न लोकविरोधः। परिच्छिन्नयोर्हि प्रदेशयोरामलकयोः संयोगो न व्याप्य वर्तते। आकाशसंयोगो [1]हि नाकाशं व्याप्नोति। कस्मात्? प्रदेशवद्द्रव्यसामान्यात्प्रदेशवदाकाशमिति भाक्तः प्रत्ययः।

एतेनात्मप्रदेशो [2]व्याख्यातः। [3]परीक्षिता च तीव्रमन्दता शब्दस्य तत्त्वं, न भक्तिकृतेति ॥ १७ ॥

ये तु शब्दं नित्यं कल्पयन्ति, त इदं पर्यनुयोज्याः। इदम् अस्ति, इदं नास्तीति, एतद्भवन्तः कथं प्रतिपद्यन्त इति। त एवमुक्ताः प्रतिब्रुवते—प्रमाणत उपलब्धेरनुपलब्धेश्चेति। अविद्यमानस्तर्हि शब्दः?—

[शब्दानित्यत्वदृढीकरणम्]

प्रागुच्चारणादनुपलब्धेरावरणानुपलब्धेश्च ॥ १८ ॥

सतोऽनु[4]पलब्धिकारणाभावे [5]कदाचिदुपलब्धेरनित्यः शब्द इति सूत्रार्थः ॥ १८ ॥

---

[1] हि विना—मूलकोशे

[2] व्याख्यात इति। अपरिच्छिन्ने प्रदेशशून्येप्यात्मनि बुद्ध्यादयो गुणा अव्याप्य वृत्तय इति आकाश इव तत्रापि भाक्त एव व्यवहारः।

[3] ननु तर्हि शब्देऽपि आकाशादौ प्रदेशव्यवहार इव भाक्तोऽस्तु तीव्रमन्देत्यादिप्रत्यय इति चेन्नेत्याह—परीक्षिता चेति। परीक्षितत्वादेव शब्दे तीव्रत्वादिप्रत्ययो न भाक्तः। आकाशात्मादौ तु भाक्त इत्यर्थः।

[सूत्रद्वयेन भ्रान्ताशङ्कानिरूपणम्]

एवं तत्त्व उक्ते जात्या प्रत्यवतिष्ठते। सा च जातिः—

तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ १९ ॥

यद्यनुपलम्भादावरणं नास्ति आवरणानुपलब्धिरपि तर्ह्यनुपलम्भात् नास्ति तस्याऽभावादप्रतिषिद्धमावरणमिति। कथं भवान् जानीते? नाऽऽवरणानुपलब्धिरुपलभ्यत इति। अयं खलु लोक आवरणमनुपलभमानः प्रत्यात्मं वेदयते। सेयमावरणोपलब्धिवत् आवरणाऽनुपलब्धिरपि संवेद्यैवेति। एवं च सति अपहतविषयमुत्तरवाक्यमस्तीति ॥ १९ ॥

अभ्यनुज्ञावादेन तूच्यते जातिवादिना—

अनुपलम्भादप्यनुपलब्धिसद्भावान्नाऽऽवरणानुपपत्तिरनुपलम्भात् ॥ २० ॥

यथाऽनुपलभ्यमानाप्यावरणानुपलब्धिरस्ति, एवमनुपलभ्यमानमप्यावरणमस्तीति [1][यद्यभ्यनुजानाति भवान् अनुपलभ्यमानावरणानुपलब्धिरस्तीति

---

[4] यदि शब्दो नित्यः स्यात् तर्हि उच्चारणात्प्रागुपलभ्येत, कारणीभूतश्रोत्रसन्निकर्षादेरव्याहतत्वात्। न च किमपि विद्यते प्रतिबन्धकम्। तदिदमाह—अनुपलब्धिकारणाभाव इति।

[5] कदाचिदुपलब्धेरिति। कदाचिदेवोपलब्धेरित्यर्थः। कदाचिदेवोपलभ्यमानोऽपि नित्य इति ब्रुवाणो देवानां प्रिय एव। तस्मादनित्यः शब्द इति।

[1] [ ] एतच्चिह्नान्तर्गतो भागः ग्रन्थस्य विनाशाद्यथाभाष्यमापूरि।

अभ्यनुज्ञाय च वदति नास्त्यावरणमनुपलम्भादिति एतस्मिन्नभ्यनुज्ञावादे प्रतिपत्तिनियमो नोपपद्यत इति ।] ॥ २० ॥

[जातिसूत्रद्वयस्य समाधानाभिधानम्]

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥

यदुपलभ्यते तदस्ति, यन्नोपलभ्यते तन्नास्तीति अनुपलम्भात्मकोऽसदिति व्यवस्थितम् । उपलब्ध्यभावश्चानुपलब्धिः, सेयमभावान्नोपलभ्यते । सच्च खल्वावरणं, तस्योपलब्ध्या भवितव्यम् । न चोपलभ्यते तस्मान्नास्तीति । तत्र यदुक्तं नाऽऽवरणानुपपत्तिरनुपलम्भादिति, एतदयुक्तमित्यर्थः ।

एवं तावत्स्वपाधनस्थित्या व्यवस्थितमनित्यः शब्द इति ॥ २१ ॥

[शब्दनित्यत्वशङ्कासमाधानं च विभक्तयन्तरोपपत्तेश्च समास इत्यन्तम्]

अथ शब्दस्य नित्यत्वं प्रतिजानानाः कस्माद्धेतोः प्रतिजानते—

अस्पर्शत्वात् ॥ २२ ॥

अत्र प्रयोगः—नित्यः शब्दः अस्पर्शत्वादाकाशादिवदिति ॥ २२ ॥

[1]अस्य व्यभिचारप्रदर्शनार्थं सूत्रं—

न कर्माऽनित्यत्वात् ॥ २३ ॥

साध्यवैधर्म्योदाहरणं—

---

[1] व्यभिचार इति । उभयत इति योज्यम् । यथा स्पर्शवां-श्चाणुर्नित्यः, तदभाववच्च कर्माऽनित्यमिति ।

नाणुनित्यत्वात् ॥ २४ ॥

इत्थं तु साधर्म्यवैधर्म्योदाहरणं उभयस्मिन्नुदाहरणे व्यभिचारादहेतुः ॥ २४ ॥

अयं तर्हि नित्यत्वे हेतुः—

सम्प्रदानात् ॥ २५ ॥

संप्रदीयमानमवस्थितमेव दृष्टं, सम्प्रदीयते शब्द आचार्येणान्तेवासिने [1]तस्मादवस्थित इति ॥ २५ ॥

तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥

[2][अत्र निराकुर्वत्सूत्रं, तदन्तरालेति] । गुरूणामुपदेशो हि तदा भवति यदा शिष्य उपसन्नो भवति । यदि ततः प्राङ्नित्य एव शब्दस्तिष्ठेत् तदोपलभ्येत । न च तथा । तस्मान्नास्तीत्यनित्य एवेत्यर्थः ॥ २६ ॥

अध्यापनादप्रतिषेधः ॥ २७ ॥

न विरोधोऽनुमानत उपलब्धेः । किमनुमानं? अध्यापनम् ।

---

[1] तस्मादिति । यस्मात्पूर्वं स्थितमेव शब्दमाचार्येणान्तेवासिने उपदिक्ष्यते, तस्मादित्यर्थः । ततश्च कथं वा पूर्वं स्थिरस्य शब्दस्य पश्चा- न्नाशः । तथा च शब्दो नित्य एवेति । तथा च श्लोकवार्तिकम्—

"तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यतीति"

[2] इयान्ग्रन्थः मूलकोशस्य त्रुटितत्वेन मयैवाऽऽपूरि ।

अध्यापनं नाम दीयमानस्य संप्रदानप्राप्तिः। दातृप्रतिगृहीत्रोरन्तराले

[1]शब्दोऽस्त्यध्यापनात् ॥ २७ ॥

[2]उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥ २८ ॥

न शब्दस्याध्यापनं प्रतिषिध्यते अपि तु नृत्योपदेशनवदनित्यस्याध्यापनमित्युच्यत इति ॥ २८ ॥

अयं तर्हि शब्दस्यावस्थाने हेतुः—

अभ्यासात् ॥ २९ ॥

[3]अभ्यस्यमानमवस्थितं दृष्टम्। पञ्चकृत्वो रूपं पश्यतीति, रूपम-

---

[1] पूर्वपक्षसूत्रं—अध्यापनादिति। शब्दो नित्य एव अध्यापनमेव हि तत्र गमकम्। अन्तरालकाले च यदि न विद्यते शब्दः तर्हि कथमध्यापनमुपपद्यते। अन्तराळे विद्यमानत्वान्नित्यश्चेत्किमिति नोपलभ्यते? विद्यमानस्याऽपि तस्य कण्ठताल्वाद्यभिघातरूपव्यञ्जकाभावादिति ब्रूमः। तदिदमाह—शब्दोऽस्तीति।

[2] शब्दानित्यत्वं प्रतिपादयत्सूत्रं—उभयोरिति। गुरूच्चारणरूपाध्यापनं हि नित्यत्वानित्यत्वयोरुदासीनम्। अथ च नित्यत्वविरोध्येव। त्वदुक्तदिशा न ह्यध्यापनं नाम स्वस्वत्वध्वंसपूर्वकपरस्वत्वापादनरूपं दानं, बहूनामेकदा स्वत्वविरोधात्परस्वदानाऽसम्भवाच्च। येनाऽनित्यत्वं प्रतीमः। अपि तूपदेशमात्रं नृत्याध्यापनादाविव।

[3] अभ्यस्यमानं हि स्थिरं भवेत्। यथा दशकृत्वो रूपं पश्यति। दशकृत्वोऽनुवाकमधीत इति। ततश्चात्र शब्दस्याभ्यासेन हेतुना नित्यत्वं

वस्थितं पुनर्दृश्यते। दशकृत्वोऽधीतोऽनुवाक इत्यत्र शब्दे भवति अभ्यासः। तस्मादवस्थितस्य शब्दस्य पुनःपुनरुच्चारणम् अभ्यास इति ॥ २९ ॥

अस्यानैकान्तिकत्वप्रदर्शनार्थं सूत्रं—

नान्यत्वेऽप्यभ्यासोपचारात् ॥ ३० ॥

अनवस्थानेऽप्यस्य चाभ्यासाभिधानं भवति। [1]द्विर्नृत्यतु भवान् त्रिर्नृत्यतु भवान् इति। अतो व्यभिचारादयं अहेतुरिति ॥ ३० ॥

अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः ॥ ३१ ॥

[2]यदिदमन्यदिति मन्यसे, तत्स्वार्थेनानन्यत्वा[3]दन्यन्न भवति। एवमन्यताया अभावः। तत्र यदुक्तमन्यत्वेऽप्यभ्यासोपचारादिति, तदेतदयुक्तमिति ॥ ३१ ॥

अथ सिद्धान्तवादिनाऽन्यशब्दप्रयोगः प्रतीषिध्यते—

---

साधयितुं शक्यत इत्याह—अभ्यस्यमानमिति।

[1] नाभ्यासः स्थैर्यसाधकः। कुतः? अनित्यत्वेऽपि शब्दानां अध्ययनाभ्यासप्रसम्भवात्। दृश्यते चायमर्थ इत्याह— द्विर्नृत्यत्विति।

[2] वाक्छलेनात्र पूर्वपक्षी प्रत्यवतिष्ठते—यदिति।

[3] अन्यत्वेऽप्यभ्यासोपचारादित्यनैकान्तिकतोद्भावनं तदा स्याद्यदा अन्यत्वं कश्चिद्भवेत्। तदेव नास्ति, सर्वस्य स्वस्मादनन्यत्वात् इत्याह— अन्यन्न भवतीति।

[1]तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥ ३२ ॥

[2][अयं तर्हि हेतुः प्रत्यभिज्ञानात् । तदभावे प्रत्यभिज्ञानं न दृष्टं मण्यादिषु, अस्ति च प्रत्यभिज्ञानं शब्दे, स एवायं गोशब्द इति । तस्मादवतिष्ठते शब्द इति ।]

विनाशकारणाऽनुपलब्धेः ॥ ३३ ॥

यद्यनित्यं [3]तस्य [4]तस्य विनाशः कारणाद्भवति यथा लोष्ठस्य कारणद्रव्यविभागात् । शब्दश्चेदनित्यः तस्य विनाशकारणमुपलभ्येत न चोपलभ्यते । तस्मा[5]न्नित्यः शब्द इति ॥ ३३ ॥

अश्रवणकारणाऽनुपलब्धेसन्ततश्रवणप्रसङ्गः ॥ ३४ ॥

यथा विनाशकारणाऽनुपलब्धेरविनाशप्रसङ्गः तथाऽश्रवणकारणाऽनुपलब्धेस्सततं श्रवणप्रसङ्गः । व्यञ्जकाभावादग्रहणमिति चेत् प्रतिषिद्धं

---

[1] तदभाव इति । तदभावे अन्यत्वाभावे अनन्यताऽपि नास्ति । कुतः ? तयोरितरेतरापेक्षसिद्धिकत्वात् । अन्याभावेऽनन्यत्वस्य निरूपयितुमशक्यत्वात् । न हि ब्राह्मणाऽभावेऽब्राह्मणः सिद्धयति ।

[2] [ ] एतच्चिह्नान्तर्गतो ग्रन्थः वार्तिकस्थः । अत्र प्रमादाद्वा अन्यथा वा सूत्रव्याख्यात्वेन लिखितः मूलकोशे ।

[3] कस्य

[4] कस्व

[5] नित्यः शब्द इति तथा च शब्दो नित्यः विनाशकारणाभावादित्युक्तं भवति ।

व्यञ्जकम्। अथ विद्यमानस्य निर्निमित्तं श्रवणं एवं यदि विद्यमानस्य निर्निमित्तो विनाश इति ॥ ३४ ॥

उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३५ ॥

अनुमानादुपलभ्यमाने शब्दस्य विनाशकारणे विनाशकारणाऽनुपलब्धेरसत्त्वादित्यनपदेशः। किमिदमनुमानमिति चेत् सन्तानोपपत्तिः। घण्टायामभिहन्यमानायां तारस्तारतरो, मन्द्रो मन्दतर इति श्रुतेर्भेदान्नानाशब्दसन्तानोऽविच्छेदेन श्रूयते। तत्र नित्ये शब्दे घण्टास्थमन्यगतं वाऽवस्थितं सन्तानवृत्ति वाऽभिव्यक्तिकारणं वाच्यं, येन श्रुतिसन्तानो भवतीति। शब्दभेदे चासति श्रुतिभेद उपपादयितव्यः।

अनित्ये च शब्दे घण्टासन्तानवृत्तिसंयोगसहकारिनिमित्तान्तरं संस्कारभूतं पटुमन्दमनुवर्तते। तस्यानुवृत्त्या शब्दसन्तानानुवृत्तिः। ततः पटुमन्दभावाच्च तीव्रमन्दता शब्दस्येति भवति तत्कृतः श्रुतिभेदः ॥ ३५ ॥

नन्वयं संस्कारो नास्त्यनुपलब्धेरित्याह—

पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३६ ॥

पाणिकर्मणा पाणिघण्टाप्रश्लेषो भवति तस्मिंश्च सति संस्कारो निरुध्यते। ततश्च शब्दसन्तानो नोत्पद्यते, अनुत्पत्तौ श्रुतिविच्छेदः। यदि संस्कारं शब्दोत्पत्तिनिमित्तं न प्रतिपद्यसे पाणिघण्टासंश्लेषाच्छब्दसन्तानोच्छेदो न प्राप्नोति। तस्मात् निमित्तान्तरस्य संस्कारभूतस्य नानुपलब्धिरिति ॥ ३६ ॥

[1]विनाशकारणाऽनुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ ३७ ॥

यानि खल्विमानि शब्दश्रवणानि न तेषां विनाशकारणं भवतोपपाद्यते अनुपपादनादवस्थानं, अवस्थानाच्चेषां नित्यत्वं प्रसज्यते। अथ नैवं, तर्हि विनाशकारणाऽनुपलब्धेः शब्दस्यावस्थानान्नित्यत्वमिति ॥ ३७ ॥

अस्पर्शत्वादप्रतिषेधः ॥ ३८ ॥

यदि तन्नाकाशगुणः शब्द इति शब्दस्याकाशगुणत्वं प्रतिषिध्यते अयमनुपपन्नः प्रतिषेधः। कस्मात्? [2]अस्पर्शत्वाच्छब्दाश्रयस्य। रूपादिसमानदेशस्याग्रहणे शब्दसन्तानोपलब्धेरस्पर्शव्याप्तिद्रव्याश्रयः शब्द इति न कम्पसमानाश्रयः ॥ ३८ ॥

प्रतिद्रव्यं रूपादिभिस्सन्निकृष्टैस्तैस्समानदेशो व्यज्यते इति नोपपद्यते—

विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३९ ॥

सन्तानोपपत्तेश्चेति चार्थः। विभागश्च विभागान्तरं च विभक्त्य-

---

[1] तृतीयाध्याये द्वितीयान्हिके त्रयोविंशतिसङ्ख्याकं सूत्रं समानानुपूर्वीकम्।

[2] पाणिश्लेषाद्धि कम्पसमानाश्रयेऽनुनादः कारणोपरमात्कम्पवदुपरमते। ततश्च घण्टाद्याश्रय एव शब्दोऽभ्युपगतः स्यात्। न स्यात्। अस्पर्शस्यैवाकाशस्य तदाश्रयत्वाङ्गीकारात्। शब्दो हि न स्पर्शवद्विशेषगुणः। अग्निसंयोगासमवायिकारणकत्वाभावदवदकारणगुणपूर्वकत्वाद्वा इत्याह— अस्पर्शस्येति।

न्तरम् । विधर्माणश्च शब्दस्वरूपाश्चैकद्रव्याश्रयाः श्रूयन्ते । यदि रूपादयः शब्दाश्च प्रतिद्रव्यं समुदिताः समस्ताः तस्मिन् समासे समुदाये यो यथाचेति यत्सन्निकृष्टः तस्य तथाजातीयकस्यैव शब्दस्य श्रवणेन भवितव्यं रूपादिवत् । ॥ ३९ ॥

[शब्दपरिणामप्रकरणम्]

[वर्णा विकारिणो न वेति संशयनिरूपणम्]

[1]द्विविधश्चायं शब्दः [2]वर्णात्मको [3]ध्वनिमात्रश्च । तत्र वर्णात्मनि—

[4]विकारादेशोपदेशात्संशयः ॥ ४० ॥

दध्यत्रेति केचिदेकार इत्वं हित्वा यकारत्वमापद्यत इति विकारं मन्यन्ते । केचित्तु संहितायां विषये इकारो न प्रयुज्यते तस्य स्थाने यकारः प्रयुज्यते आदेश इति । एवमुभयमुपदिश्यते, तत्र न ज्ञायते [5]किं तत्त्वमिति, आदेशोपदेशस्तत्त्वं न विकारोपदेशः ॥ ४० ॥

---

[1] वर्णेषु प्रकृतिविकृतिभावस्य विद्यमानत्वेन मृत्सुवर्णादिवत्परिणामिनित्या वर्णा इति साङ्ख्यमतं परीक्षितुमारभते—द्विविध इति ।

[2] वर्णात्मकः = अकारादिः ।

[3] ध्वनिमात्रः = शङ्खादिनिमित्तः ।

[4] 'इको यणचि' इत्यत्र इक्स्थाने यण् विधीयते । तत्र इकारादेर्विकारो यकारादिरिति साङ्ख्या व्याचक्षते । परे तु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इत्यादेशं समादिशन्ति । ततश्च संशयः किं वर्णा विकारिणो न वेति । विकारश्च दुग्धादेर्दध्यारम्भकत्वमिवात्रापि

[न वर्णा विकारिण इति निरूपणम्]

[1]प्रकृतिविवृद्धौ विकारविवृद्धेः ॥ ४१ ॥

प्रकृत्यनुविधानं विकारेषु दृष्टं यकारे तु ह्रस्वदीर्घानुविधानं नास्ति। तेन न विकारित्वमनुमीयत इति ॥ ४१ ॥

[वर्णा विकारिण इति आक्षेपः]

[2]न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४२ ॥

द्रव्यविकारा न्यूनाः समा अधिकाश्च गृह्यन्ते। तद्वदयं विकारो न्यूनः स्यादिति ॥ ४२ ॥

---

द्रव्यान्तरारम्भकत्वरूपमेव तद्वाच्यम्। तथा च संशयप्रदर्शनार्थसूत्रं— विकारादेशेति।

[5] किं साङ्ख्योक्तदिशा इकारादेर्विकारो यकारादिः? अथ इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इति संशयः। तथा च तत्त्वं न ज्ञायत इत्याह—किं तत्त्वमिति।

[1] आदेशपक्ष एव हि साधीयान्। न वर्णेषु विकारित्वमभ्युपगच्छामः। अन्यथा महदल्पावयवारब्धावयविनो महदल्पत्ववत् ह्रस्वेकारारब्धयकारापेक्षया दीर्घेकारारब्धयकारस्य विवृद्धिः स्यादित्याह— प्रकृतीति।

[2] अस्याक्षेपसूत्रं — न्यूनसमाधिकेति। अयमाशयः—यथा वा न्यूनाधिकनारिकेलबीजाभ्यां समौ वृक्षौ, न्यूनपरिमाणवटबीजान्महान्वटतरुः, एवं विकाराणां प्रकृत्यपेक्षया न्यूनत्वस्य समत्वस्याधिकत्वस्य चोपपत्तेर्विकृतिपक्ष एव श्रेयानिति।

[दृष्टान्तमात्रमसाधकमुक्तेऽर्थे इति निरूपणम् ]

[1]द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः ॥ ४३ ॥

अत्र नोदाहरणसामर्थ्याद्धेतुरस्ति न वैधर्म्यात् । अनुपसंहृतश्च हेतुना दृष्टान्तो न साधक इति पतिदृष्टान्ते चानियमः प्रसज्येत यथाऽनडुहस्थाने अश्वो वोढुं नियुक्तो न तद्विकारो भवति । एवमिवर्णस्य स्थाने यकारः प्रयुक्तः न तद्विकार इति ।। ४३ ॥

[वर्णानां विकारित्वे पूर्वपक्षसिद्धान्तयुक्तयः ; 'गुणान्तरापत्ति' सूत्रपर्यन्तं वर्णानामनित्यत्वस्थापनं च ।]

द्रव्यविकारोदाहरणं च —

[2]नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४४ ॥

अतुल्यानां द्रव्याणां प्रकृतिभावो विकल्प्यते विकाराश्च प्रकृतीरनुविधीयन्ते । न त्विवर्णमनुविधीयते यकारः । न जातु न्यग्रोधबीजान्नारिकेळपादपो भवति, भवति वा नारिकेळबीजान्न्यग्रोधपादपः नत्विवर्णभेदमनुविधीयते यकारस्तस्मादनुदाहरणं द्रव्यविकार इति ॥ ४४ ॥

अस्याक्षेपसूत्रं—

द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः ॥ ४५ ॥

न प्रकृतिभेदमवश्यमनुविधीयन्ते विकाराः द्रव्यत्वेन तुल्यत्वेपि प्रकृतीनां विकारवैषम्यदर्शनात् । एवं वर्णत्वेन तुल्यत्वेऽपि विकारवैषम्यम् ।

---

[1] पूर्वोक्तस्य प्रत्याख्यानसूत्रं—द्विविधस्यापीति ।

[2] समाधानसूत्रं—नातुल्येति ।

तथा ह्रस्वदीर्घत्वाभ्यां वैषम्ये [1]भविष्यति प्रकृतिसाम्य इव विकारवैषम्यमिति भावः ॥ ४५ ॥

तत्प्रत्याख्यानसूत्रं—

न विकारधर्माऽनुपपत्तेः ॥ ४६ ॥

[2][द्रव्यविकारतुल्यताऽत्र न शङ्क्या । विकाराणां ह्ययं धर्मो प्रकृत्यनुविधानं, तद्भेदे च भेदः, प्रकृते तदनुपपत्तिः ह्रस्वत्वादिना प्रकृतिभेदेऽपि कार्यभेदाऽभावात् ।] ॥ ४७ ॥

इतश्च न वर्णविकारः—

विकारप्राप्तानामपुनरावृत्तेः ॥ ४७ ॥

यदि विक्रियन्ते वर्णाः पुनरापत्तिं नाप्नुवन्ति । [3]नो खलु क्षीरविकारे क्षीरं दृष्टमिति ॥ ४७ ॥

अस्याक्षेपः—

सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४८ ॥

सुवर्णविकाराणां रुचकादीना पुनःसुवर्णत्वापत्तिदर्शनादहेतुः, 'विकारप्राप्तानां अपुनरावृत्ते'रित्येतदयुक्तमिति ॥ ४८ ॥

---

[1] तरिष्यति

[2] [ ] एतच्चिह्नान्तर्गतग्रन्थः मूलकोशस्य त्रुटितत्वान्मयैव व्यरचि ।

[3] विकारप्राप्तस्य प्रकृतिरूपता नैव दृष्टा इत्याह—नो खल्विति । अयमर्थः—इकारस्तु यकारतां प्राप्तः पुनरिकारतामाप्नोति ; दध्यत्रेत्युक्तावपि दधि अत्रेत्यनुपदमेव वक्तुं शक्यत्वात् ।

यथा पयो दधिभावमापन्नं न पुनः पयो भवति ; किमेवं वर्णानामप्यनावृत्तिः, अथ सुवर्णवत्पुनरापत्तिरिति सुवर्णोदाहरणोपपत्तिश्च—

न, तद्विकाराणां सुवर्णभावाऽव्यतिरेकात् ॥ ४९ ॥

अवस्थितं सुवर्णं सर्वावस्थं दृश्यते नैवं कश्चिच्छब्दात्मा हीयमानेनेत्वेनोपजायमानेन यत्वेन धर्मो गृह्यते तस्मात्सुवर्णोदाहरणं नोपपद्यत इति[1] ।
॥ ४९ ॥

अस्याक्षेपः—

[2]वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः ॥ ५० ॥

वर्णविकारा अपि वर्णत्वं न व्यभिचरन्ति । यथा सुवर्णविकारः सुवर्णत्वमिति ॥ ५० ॥

सामान्यवतो धर्मयोगो न सामान्यस्य ॥ ५१ ॥

कुण्डलरुचकौ सुवर्णस्य धर्मौ [3]न सुवर्णत्वस्येति ॥ ५१ ॥

---

[1] सुवर्णविकारस्थले हि सुवर्णत्वादीनामेव प्रकृतिता न तु कटकत्वादीनाम् । सुवर्णवत्पुनरापत्तिरित्यत्र किं सुवर्णतामपहाय कटकादिभावत्वमभ्युपेयतेऽथापरित्यज्यैव । आद्येऽपौ देवानां प्रिय इति नातिवक्तव्यम् । द्वितीयं तु नास्त्येव प्रकृते पुनरिकारतां हित्वैव यकारतां प्राप्तस्य इकारतापत्तिरस्त्येवेति दुष्परिहर एव दोष इत्याह—नोपपद्यत इति ।

[2] "वर्णत्वा......मप्रतिषेधः" 'सामान्यवतो........सामान्यस्य" इति सूत्रद्वयमेके भाष्यवाक्यत्वेन पिपठिषन्ति । मूलकोशानुसारेणात्र सूत्रत्वं यग्राहि ।

इतश्च वर्णविकारानुपपत्तिः—

**नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ॥ ५२ ॥**

नित्यत्वे न युक्तो विकारः, [1]व्याघातात् । अनित्या वर्णा इत्येतस्मिन्पक्षे न युक्तमवस्थानम् । [2]विकारः पुनरनवस्थितानां वर्णानां न भवति इति ॥ ५२ ॥

[3]नित्यत्वपक्षे तावत्समाधिः—

**नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ५३ ॥**

[4]नित्या वर्णा न विक्रियन्त इति विप्रतिषेधः । यथा नित्यत्वे सति

---

[3] न सुवर्णत्वस्येति । यथा कुण्डलरुचकौ सुवर्णस्यैव धर्मौ तथेकारयकारौ न कस्यापि वर्णात्मनो धर्मौ । येन पुनरापत्तिं प्रतीम इत्यर्थः ।

[1] वर्णानां नित्यत्वपक्षे, नित्यत्वादेव तेषामविकारिता । अन्यथा व्याघात इत्याह—**व्याघातादिति** ।

[2] अथाऽनित्या इति, तदाऽचिरस्थायित्वाद्वर्णानां न विकारोपपत्तिरित्याह—**विकारः पुनरिति** ।

[3] विकारवादी नित्यतामवलम्ब्याऽपि विकारमाशङ्कते— **नित्यत्वपक्ष इति** ।

[4] नित्यानां नानाविधधर्माश्रयत्वेन युक्तमत्र विकारित्वम् । यथाऽकाशादयः पदार्था नित्या अप्यतीन्द्रियाः । गोत्वादयोऽनित्या अपि

किञ्चिदतीन्द्रियं परमाण्वादि, इन्द्रियग्राह्याश्च वर्णाः । एवं नित्यत्वे सति किञ्चिन्न विक्रियते ; वर्णास्तु विक्रियन्ते इति ।

धर्मविकल्पो [1]विरोधाददहेतुः । विरुद्धं हि नित्यत्वं विकारित्वं चेति । अत इयं विकल्पसमा जातिः ॥ ५३ ॥

अथाऽनित्यपक्षे समाधिः —

[2]अनवस्थायित्वे वर्णोपलब्धिवत्तद्विकारोपपत्तिः ॥ ५४ ॥

यथाऽनवस्थायिनां वर्णानां श्रवणं भवति एवमेषां [3]विकारोऽपि भवति । इयं वर्णोपलब्धिरसम्बन्धाददहेतुः । न हि वर्णोपलब्धिर्वर्णविकारेण सम्बन्धादसमर्था वर्णविकारमनुमापयेत् । अत इयं साधर्म्यसमा जातिः ॥ ५४ ॥

उभयोरप्युत्तरम् —

---

ऐन्द्रियकाः । एवं केषाञ्चन नित्यानामविकारित्वे वर्णानां पुनरस्तु विकारित्वमित्याह— नित्या इति ।

[1] इयं विकल्पसमा जातिरित्याह—विरोधादिति ।

ऐन्द्रियकत्वानैन्द्रियकत्वाभ्यामविरोधेऽपि नित्यत्वस्य विकारेण विरोध एवेत्याह—विरुद्धं हीति ।

[2] अनित्यत्वमालम्ब्यापि शक्यो विकार इत्याह स एव जातिवादी— अनवस्थायित्वेऽपीति ।

[3] विकारोऽपीति । अनवस्थायित्वेऽपि वर्णानां इन्द्रियसम्बन्धेन सविषयज्ञानजनकत्वं यथा, तथा विकारोऽपीति भावः ।

विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥ ५५ ॥

तद्धर्मविकारादिति न युक्तः प्रतिषेधः । न खलु [1]विकारधर्मकं किञ्चिन्नित्यमुपलभ्यते इति वर्णोपलब्धिवदिति च न युक्तः प्रतिषेधः । अवग्रहे हि दधि अत्रेति प्रयुज्य चिरं स्थित्वा ततः संहितायां प्रयुङ्क्ते दध्यत्रेति ॥ ५५ ॥

इतश्च वर्णविकारानुपपत्तिः—

[2]प्रकृत्यनियमाद्वर्णविकाराणाम् ॥ ५६ ॥

इकारस्थाने यकारः श्रूयते दध्यत्रेति, यकारस्थाने खलु इकारः सिध्यतीति । यदि स्यात्प्रकृतिविकारभावो वर्णानां तदा प्रकृतिनियमः स्यात् । [3]दृष्टो हि विकाराणां प्रकृतिनियम इति ॥ ५६ ॥

---

[1] विकारधर्मकमिति । विकारो नाम स्वरूपपरित्यागेन रूपान्तरापत्तिः । न चैतन्नित्ये सम्भवति । नात्र घटादेः कपालाद्युपादेयत्ववद्विकारस्सम्भव्यते । यकारकाले इकाराऽनुपलम्भात् । अनित्यत्वपक्षेऽपि प्रत्यक्षं वर्णस्य द्वितीयक्षणे स्यात् ; विकारस्तु कालान्तरीयो न युज्यते । दधीति शब्दानन्तरमत्रेति शब्देन तस्य नाशादिति भावः ।

[2] 'प्रकृत्यनियमादि'ति मुद्रितः क्वाचित्कः पाठः । अत्र त्वेतन्मूलकोशानुसारेणैव सूत्रपाठ आदृतः, विरोधाभावात् ।

[3] दृष्टो हीति । क्षीरदध्नोः प्रकृतिविकारभावो दृष्टः । तथापि क्षीरस्य दधिभाव इव न दध्नः क्षीरभावः । प्रकृते तु दध्यत्रेत्यादौ इकारो

[1]अनियमे नियमान्नाऽनियमः ॥ ५७ ॥

योऽयं प्रकृतेरनियम इत्युक्तोऽनियमः स विषये नियतत्वान्नियम इति भवति। एवञ्च सत्यनियमो नास्ति, तत्र यदुक्तं प्रकृत्यनियमादिति, एतदयुक्तमिति ॥ ५७ ॥

[2]नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ ५८ ॥

नियम इत्यत्रार्थाभ्यनुज्ञा, अनियम इति तस्य प्रतिषेधः। अनुज्ञाप्रतिषेधयोर्व्याघातादनर्थान्तरत्वं न भवति। किञ्चानियमे हि स्वविषयनियतत्वा[3]न्नियमे सति नियमप्रतिषेधो न भवतीति ॥ ५८ ॥

न वर्णा विक्रियन्ते—

[4]गुणान्तरापत्त्युपमर्द-ह्रास-वृद्धि-लेश-श्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः ॥ ५९ ॥

गुणान्तरापत्तिरुदात्तस्यानुदात्तत्वमित्येवमादिः। उपमर्दो नाम एकरूपनिवृत्तौ रूपान्तरोपजनिः। ह्रासो दीर्घस्य ह्रस्वः। वृद्धिर्ह्रस्वस्य

---

यकारस्य प्रकृतिभूतः। विध्यतीत्यादौ तु यकार एव इकारप्रकृतिरिति नात्र विकारः सम्भवतीति भावः।

[1] छलवादिनः शङ्कामाह– अनियमेति।

[2] आशङ्कां पूर्वोक्तामपाकुर्वन्समाधिमाह—नियमेति।

[3] त्वान्नि भवद्भिर्नियम शब्द उपपाद्यते? कस्मात्—मूलकोशे

[4] वर्णानां प्रकृतिविकृतिभावं निराकृत्य शब्दानामादेशपक्षे विकारवचनव्यक्तिं निरूपयितुमाह—गुणान्तरेत्यादिना।

दीर्घः । तयोर्वा प्लुतः । लेशो लाघवम् । स्त इत्यस्तेर्विकारः । श्लेष आगमः, प्रकृतेः प्रत्ययस्य वा । एते विकाराः एत एवादेशा, एते चेद्विकारास्तर्ह्युपपद्यन्ते वर्णविकारा इति[1] ॥ ५९ ॥

[शब्दशक्तिपरीक्षाप्रकरणम्]

[पदनिरूपणम्]

[2]ते विभक्त्यन्ताः पदम् ॥ ६० ॥

ते वर्णा यथादर्शनं विकृता विभक्त्यन्ताः पदसंज्ञका भवन्ति । विभक्तिर्द्वयी [3]नामिक्याख्यातिकी च । ब्राह्मणाः पठन्तीत्युदाहरणम् ।

[4]उपसर्गनिपातास्तर्हि विभक्त्यभावान्न पदसंज्ञाः ; ततश्च लक्षणान्तरं वाच्यमिति । न, शिष्यते खलु नामिक्या विभक्तेरव्ययाल्लोपः तयोः पदसंज्ञार्थम् ॥ ६० ॥

[5][ननु शब्दानित्यत्वपक्षे अर्थप्रत्ययो न प्राप्नोति । अन्त्यवर्णकाले

---

[1] अयमाशयः—ततश्च वर्णविकारव्यवहारस्योपपन्नत्वादनित्यत्वेऽपि वर्णानां नानुपपत्तिरिति सिद्धम् ।

[2] एतावता वर्णानामनित्यत्वमुपपाद्य शब्दप्रामाण्योपयोगित्वेन पदं निरूपयति — त इति ।

[3] नामिकी स्वादयः, तिबादयस्त्वाख्यातिकी ।

[4] उपसर्गाः प्रादयः, निपाताश्चादयः ।

[5] [ ] एतच्चिह्नान्तर्गतः अपूर्णो ग्रन्थः [illegible] ।

पूर्वपूर्ववर्णाऽनवस्थानादिति, न, अन्त्यवर्णात्पूर्ववर्णप्रतिसन्धानापेक्षादर्थप्रत्ययोपपत्तेः । अथ नामपदं चिन्त्यते ।]

[पदार्थः कः ? इति संशयप्रदर्शनम्]

[1]व्यक्त्याकृतिजातिसन्निधावुपचारात्संशयः ॥ ६१ ॥

यस्मादयं गोशब्दः व्यक्त्याकृतिजातिष्वविनाभावेन वर्तमानासु प्रयुज्यते, अविनाभाववृत्तिश्च सन्निधिः, अतो न ज्ञायते किं व्यक्तिः पदार्थः उताकृतिरुत जातिरिति ॥ ६१ ॥

[व्यक्तिशक्तिवादिनां मतनिरूपणम्]

शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणमिति प्रयोगदर्शनार्थं सूत्रं—

[2]याशब्द–समूह–त्याग–परिग्रह–सङ्ख्या–वृद्ध्यपचयवर्ण–समासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः ॥ ६२ ॥

व्यक्तिः पदार्थः ; कस्मात् ? याशब्दप्रभृतीनां व्यक्तावुपचारात्प्रयोगः । उपचारः प्रयोगः । या गौस्तिष्ठति या गौर्निषण्णेति । नेदं वाक्यं जातेरभिधायकम् । तस्या एकत्वेन [3]विशेषणमनर्थकम् ।

---

[1] व्यक्तिर्गवादिः, जातिर्गोत्वादिः आकृतिरवयवसंस्थानविशेषः । तेषां सन्निधिः सामीप्यम् । तत्रोपचारात् ज्ञानात् । तथा च त्रयाणां युगपत्प्रत्ययात्किमेतेषां प्रत्येकं पदार्थ उत समस्त इति संशयः ।

[2] जात्याकृतिव्यतिरेकेण व्यक्तावेव शक्तिरिति वदतां मतमाह—याशब्देति ।

[3] विशेषणानर्थक्यात् ।

गवां समूह इति भेदाद्द्रव्याभिधानं न जातेरभेदात् । गां ददातीति द्रव्यस्य त्यागो, न जातेरमूर्तत्वात् । परिग्रहः स्वत्वेनाभिसम्बन्धः[1] । सोऽपि मूर्तायाव्यक्तेरेव सम्भवति न जातेः । सङ्ख्या दश गावो विंशतिर्गाव इति भिन्नं द्रव्यं सङ्ख्यायते न जातिरभेदात् । वृद्धिः कारणवतो द्रव्यस्यावयवोपचय इति अवर्धताऽश्व इति । निरवयवा जातिरिति । एतेनापचयो व्याख्यातः । वर्णः—कपिला गौरिति । द्रव्यस्य गुणयोगो, न सामान्यस्य । समासः गोहितं गोमुखमित्यादि । द्रव्यस्य सुखयोगः न जातेः । अनुबन्धः स्वरूपप्रजननसन्तानः गौर्गां जनयतीति तदुत्पत्तिधर्मत्वात् द्रव्ये युक्तं न जातौ ॥ ६२ ॥

[न व्यक्तिः पदार्थ इति निरूपणम्]

अस्य च प्रतिषेधार्थं सूत्रं—

न तदनवस्थानात् ॥ ६३ ॥

[2]न व्यक्तिः पदार्थः । कस्मात् अनवस्थानात् । एतदुक्तं भवति यद्ययं गोशब्दो व्यक्तिमात्राभिधायकोऽभविष्यत् तेन यस्यां कस्यांचिद्व्यक्तौ प्रत्ययोऽभविष्यदिति ॥ ६३ ॥

[व्यक्तेरपदार्थत्वे व्यक्तावुपचारः कथं ? इत्याशङ्क्य समाधानकथनम्]

यदि व्यक्तिर्न पदार्थः, कथं या गौस्तिष्ठतीत्येवमादिः ? निमित्ताद-

---

[1] यथा मैत्रस्य गौश्चैत्रस्य गौरिति ।

[2] व्यक्तिमात्रस्यानवस्थितत्वेन न तत्र शक्तिरभ्युपेया अपि तु जातिविशिष्टव्यक्तावेवेत्याह—नेति ।

तद्भावे तदुपचारो दृष्ट इति तस्य प्रदर्शनार्थं सूत्रं—

सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारणसामीप्य-योग-साधनाधिपत्येभ्यो ब्राह्मण-मञ्च-कट-राज-सक्तु-चन्दन-गङ्गा-शाकटान्न-पुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ६४ ॥

[1]अतद्भावेऽपि [2]तदुपचार इति । अतच्छब्दवाच्यस्यार्थस्य तच्छब्देनाभिधानमुपचारः । यथा सहचरणात्—यष्टिकां भोजयेति यष्टिकासहचरितो ब्राह्मणोऽभिधीयते । स्थानात्—मञ्चाः क्रोशन्तीति मञ्चस्थाः पुरुषा अभिधीयन्ते । तादर्थ्यात्—कटार्थेषु वीरणेषु व्यूह्यमानेषु कटं करोतीति । वृत्तात्—कुबेरो राजा, यमो राजा, यमवद्वर्तत इत्यर्थः । मानात्—आढकेन मिताः सक्तवः आढकसक्तवः । धारणात्—तुलायां धृतं चन्दनं तुलाचन्दनमिति । भवति सामीप्यात्—गङ्गायां गावश्चरन्तीति देशोऽभिधीयते । योगात्—कृष्णेन रागेण युक्तः शकटः कृष्ण इत्यभिधीयते । साधनात्—अन्नं प्राणा इति । आधिपत्यात्—अयं पुरुषः कुलं, अयं गोत्रमिति । तत्रायं सहचरणाद्योगाद्वा जातिवाचकः शब्दो व्यक्तौ प्रयुज्यते इति ॥ ६४ ॥

[आकृतिशक्तिवादिमतोपवर्णनम्]

[3]यदि खलु गौरिति पदस्य न व्यक्तिरर्थः; अस्तु तर्हि—

---

[1] अतद्भावेऽपि=तत्पदाशक्यत्वेऽपि ।

[2] तदुपचारः=तच्छब्दव्यपदेशः ।



[3] भवत्वाकृतिरेव शक्येति मतमाह—यदीति ।

आकृतिस्तदपेक्षत्वात्सत्त्वव्यवस्थानसिद्धेः ॥ ६५ ॥

आकृतिः पदार्थः । कुतस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः । सत्त्वावयवानां तदवयवानां च नियतो व्यूह आकृतिः ; तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं प्राणिव्यवस्था सिध्यति, अयं गौरयमश्व इति, नागृह्यमाणायाम् । यस्य च ग्रहणात्सत्त्वव्यवस्थानं सिध्यति तं शब्दोऽभिधातुमर्हति सोऽस्यार्थ इति । तदप्युपपद्यते तत्र जात्या योगः यत्र जातिविशिष्टद्रव्यमभिधीयते गौरिति । न चावयवव्यूहस्य जात्या योगोऽस्ति । तस्मान्नाकृतिः पदार्थः ॥ ६५ ॥

[जातिशक्तिवादिनां मतस्याभिधानम् ]

अस्तु तर्हि—

व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ॥ ६६ ॥

गां प्रोक्षय गामानय गां देहीति नैतानि मृद्गवके प्रयुज्यन्ते, कुतः ? जातेरभावात् । यदभावात्तत्रासम्प्रत्ययः स पदार्थ इति ॥ ६६ ॥

[पूर्वोक्तवादनिराकरणम् ]

[1]नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६७ ॥

जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते । नागृह्यमाणयोस्तयोः जातिमात्रं शुद्धं गृह्यते । तस्मान्न जातिः पदार्थ इति ॥ ६७ ॥

[व्यक्त्याकृतिजातयः पदार्थ इति निरूपणम् ]

---

1 केवलजातिपक्षं निराकरोति—नाकृतीति ।

क इदानी पदार्थ इति ?

**व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६८ ॥**

तु शब्दो विशेषणार्थः । किं विशिष्यते प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वमिति[1] ॥ ६८ ॥

[व्यक्तिलक्षणनिरूपणम्]

कतमा व्यक्तिः, कतमा आकृतिः, कतमा जातिरित्यपेक्षायां व्यक्तिलक्षणप्रतिपादनार्थं सूत्रं—

**व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६९ ॥**

यद्द्रव्यमुपलब्धिलक्षणप्राप्तानां रूपादीनां स्पर्शान्तानां गुणानामाश्रयः तत् [2]मूर्च्छितावयवत्वान्मूर्तिरिति चोच्यते । व्यक्तत्वाद्व्यक्तिरित्युच्यत इति । द्रव्यं व्यक्तिलक्षणलक्षितं गुणाश्च विशेषाश्च तदाश्रयश्च, अत्र तच्छब्दलोपात् गुणविशेषाश्रयपदेन द्रव्यमुच्यते । कर्मापि गुणविशेषशब्दवल्लभ्यते गुणेभ्यो विशेषा इत्यतः तदपि व्यक्तत्वाद्व्यक्तिर्भवति । गुणविशेषग्रहणं किमर्थं? गुणपदेन सङ्गृहीताया आकृतेर्निराकरणार्थम् । आकृति ःसंयोगविशेषः । स च गुण इति तन्निराकरणा[3]र्थं गुणविशेषग्रहणम् ॥ ६९ ॥

---

[1] ततश्च व्यक्त्याकृतिजातयस्तिस्र एवास्माकं पदार्थः गुणप्रधानभावस्तु कस्यचित्क्वचिदेवेति स्फुटोऽर्थः ।

[2] मूर्च्छितावयवमिति । यस्य परस्परमवयवाः संयुक्तास्तन्मूर्च्छितावयवम् ।

[3] र्थं × × × कि. मूलकोशे

[आकृतिस्वरूपनिरूपणम्]

आकृतिर्जातिलिङ्गाख्या ॥ ७० ॥

यया जातिर्लिङ्गानि च प्रख्यायन्ते [1]तामाकृतिं विद्यात् । शिरः पाणिपादादिमदाकारसामान्येन हि गोत्वं व्यज्यते अतस्तज्जातिलिङ्गम् । तदपि तदवयवसामान्येन व्यज्यत इति तदुभयमाकृतिरिति ॥ ७० ॥

[2]समानप्रसवात्मिका जातिः ॥ ७१ ॥

या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु यया बहूनीतरेतरतो न व्यावर्तन्ते, योऽर्थोऽनेकप्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम् । तद्यथा इमानि कुण्डानीत्यनुवर्तते बुद्धिः । अत्र समानप्रत्ययोत्पत्तिकारणमेव जातिरिति जातौ नियमः । न तु समानप्रत्ययोत्पत्तौ जातिमन्तरेणापि समानप्रत्ययदर्शनात् इति । तस्माद्व्यवस्थितं व्यक्त्याकृतिजातयः पदार्थ इति ।

इति न्यायसूत्रविवरणे द्वितीयाध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं द्वितीयोऽध्यायः ।

---

[1] न्तेकमा—मूलकोशे

[2] समानप्रसवात्मिकेति । समानाकारबुद्धिजननयोग्येत्यर्थः ।

# अथ न्यायसूत्रविवरणे तृतीयाध्याये प्रथममाह्निकम्

[इन्द्रियव्यतिरिक्त आत्मा इति निरूपणम्]

परीक्षितानि प्रमाणानि प्रमेयमिदानीं परीक्ष्यते[1]। यद्विषयोऽहङ्कारः संसारं प्रतनोति। यद्विषयं च सम्यक्ज्ञानं संसारं निवर्तयति, तच्चात्मा[2]दीत्यात्मा विचार्यते। किं पुनरत्र विचार्यं? शरीरेन्द्रियमनोबुद्धिप्राणवृत्तिव्यतिरिक्तः आहोस्विन्नेति[3]। कुतः संशयः? व्यपदेशस्योभयथासिद्धेः। [4]क्रियाकरणयोः कर्त्रा संबन्धस्याभिधानं व्यपदेशः। स द्विविधः [5]अवयवेन समुदायस्य मूलैर्वृक्षस्तिष्ठतीति। [6]अन्येन वान्यस्य व्यपदेशः परशुना वृश्चतीति। अस्ति चायं व्यपदेशः चक्षुषा पश्यतीति। तत्र नावधार्यते किमवयवेन समुदायस्य देहादिसङ्घातैरस्य व्यपदेशः; अथान्येन वान्य[7]स्य तद्व्यतिरिक्तस्येति? अन्येनायमन्यस्य व्यपदेशः। कस्मात्?—

---

[1] अपरीक्षितैः प्रमाणैः नैव प्रमेयविमर्शः शक्यत इति प्राक् प्रमाणपरीक्षा कृता। इदानीमात्मादिषट्कपरीक्षा क्रियतेऽस्मिन्नध्याये। अनेन च प्रमाणप्रमेययोः हेतुफलभावः ज्ञापितो भवति।

[2] दीत्यानि - मूलकोशे

[3] 'इच्छाद्वेषे'त्यादिसूत्रेणात्मनो धर्मिणः सत्ता प्रागेवोपपादिता। अतोऽत्र न धर्मिविषया विप्रतिपत्तिरपि तु सिद्धस्य धर्मिणो आश्रयत्वेन करणत्वेन च सिद्धानां देहेन्द्रियादीनामेव चैतन्यमस्तु लाघवादिति पूर्वपक्ष्याशयः।

[4] धात्वर्थः क्रिया, करणं तृतीयार्थः, कर्ता तिङर्थः। अत्र तृतीया सहार्थे। यद्वा क्रिया करणयोरिति कर्मणि षष्ठी। कर्त्रेति कर्तरि

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥

दृश्यतेऽनेनेति दर्शनं-चक्षुः। स्पृश्यते अनेनेति स्पर्शनं त्वक्। दर्शनेन दृष्टमर्थं स्पर्शनेन प्रत्यभिजानाति। यमहमद्राक्षं तमहं स्पृशामीति। एकविषयावेतौ प्रत्ययौ प्रतिसन्धीयेते। प्रतिसन्धानं नाम स्मृत्या सहैक-विषयत्वम्। दर्शनस्पर्शनप्रत्यययोर्घटादिविषयत्वादसम्बन्ध इति चेत्, अथ मन्यसे य एतौ दर्शनस्पर्शनप्रत्ययौ घटादिविषयौ, अतो न देहादव्यतिरेकं आत्मनो गमयतः व्यधिकरणत्वादिति। तन्न सूत्रार्थापरिज्ञानात्। दर्शन-स्पर्शनावेककर्तृकौ इति सूत्रार्थः। सङ्घातकर्तृकौ दर्शनस्पर्शनविषयौ प्रत्ययौ भविष्यत इति न युक्तं सङ्घातस्य नानात्वाबाधनात्।* ॥ १ ॥

[देहादिसङ्घात एव चेतनः इत्याशङ्का तत्समाधानं च]

[1]न विषयव्यवस्थानात् ॥ २ ॥

न देहादिसङ्घातादन्यश्चेतनः। कस्मात्? विषयव्यवस्थानात्। व्यवस्थितविषयाणीन्द्रियाणि, तानि स्वविषयग्रहणाच्चेतनानि। एवञ्च सति किमन्येन चेतनेनेति[2]।

---

तृतीया।

[5] देहेन्द्रियमनोबुध्यादि सङ्घातपक्षं दर्शयति—अवयवेनेति।

[6] व्यतिरिक्तकोटिं दर्शयति—अन्येनेति।

[7] स्य व्य—मूलकोशे

* इतः परं मूलकोशे कश्चन भागः त्रुटितः।

[1] योऽहं घटमद्राक्षं स एवाहमिदानीं स्पृशामीत्यादिप्रत्ययानुरोधेन

अस्य परिहारः सन्दिग्धत्वादहेतुः किमिन्द्रियाणां विषयनियमः चेतनत्वात्, आहोस्विच्चेतनोपकरणत्वादिति सन्दिह्यते । वयं तु ब्रूमः— चेतनोपकरणत्वेऽपि इन्द्रियाणां ग्रहणनिमित्तत्वाद्भवितुमर्हति ॥ २ ॥

[विषयव्यवस्थानं विरुद्धमिति निरूपणम्]

तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥

यस्मादेवैतानीन्द्रियाणि व्यवस्थितविषयाणि अत एवान्येन ज्ञात्रा भवितव्यं व्यवस्थितविषयेण[1] । अथ प्रयोगश्च भवति—नाचैतन्यमात्मनः स्वातन्त्र्ये सत्यव्यवस्थानात् । यत्र चैतन्यं नास्ति तत्र स्वातन्त्र्ये सत्यप्यवस्थानं नास्ति चक्षुरादिवत् ॥ ३ ॥

---

अनेकेन्द्रियकरणकोऽनेकार्थदर्शी च य एकश्चेतनः सिध्यतीत्युक्तं तदाक्षिपत्सूत्रं—**न विषयेति** ।

[2] अविद्यमाने चक्षुषि न गृह्यते रूपम् । नासति च घ्राणे गन्धो गृह्यते । तस्माद्रूपादीनां ज्ञानमिन्द्रियेणैव भवतीति इन्द्रियाण्येव स्वस्वविषयव्यवस्थितचैतन्यानि सन्त्विति व्यवस्थोपपत्तौ किमतिरिक्तश्चेतनोऽभ्युपेयेत? व्यर्थ एवेत्याशयः ।

[1] चक्षुरादीन्द्रियाणां हि तत्तद्विषयकप्रत्यक्षं प्रत्येव समवायित्वं वाच्यम् । न पुनः प्रत्यक्षत्वावच्छिन्नं प्रति । अनुमित्यादिजनकत्वे तु विनिगमकाभावः । तेन जन्यज्ञानत्वावच्छिन्नजनकतावच्छेदकमात्मत्वमङ्गीकरणीयम् । तथा च चक्षुरादेरनित्यत्वेऽपि आत्मनो नित्यत्वेन तदनुभूतविषयस्मरणादीनां विद्यमानत्वेनानुपपत्त्यभावात् । एतेन चक्षुरहमित्यप्रतीतेश्चेन्द्रियात्मवादो न युक्तः ।

[शरीरव्यतिरिक्त आत्मा इति निरूपणप्रकरणम् ]

इतश्च शरीरादिव्यतिरिक्त आत्मा—

शरीरदाहे पातकाभावात् ॥ ४ ॥

शरीरग्रहणेन शरीरेन्द्रियबुद्धिसङ्घातः प्राणिभूतो गृह्यते । प्राणिभूतं शरीरं दहतः प्राणिहिंसाकृतं पापं पातकमुच्यते । तस्याभावः अकर्तुः फलेन सम्बन्धः कर्तुश्चानभिसंबन्ध इति । कस्मात्? अभ्युपगतार्थान्तरात्मनोऽन्यः शरीरेन्द्रियबुद्धिवेदनासङ्घातः कर्ता, अन्यश्च तत्फलस्य भोक्तेति, तदेवमकृताभ्यागमकृतनाशदोषप्रसङ्गः । अनिष्टश्चायं मार्गः [1]तस्माद्यः कर्मणा कर्ता भोक्ता च स आत्मेति ॥ ४ ॥

[आत्मनो नित्यत्वेऽपि पातकाभावदोषः समानम् इत्यापादनम् ]

एवमात्मनि नित्ये सिद्धे पूर्वपक्षवाद्याह—

[2]तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥

यस्यापि नित्येनाऽऽत्मना सात्मकं शरीरं दह्यते तस्यापि शरीरदाहे पातकं न भवेत् दग्धुः । कस्मात्? नित्यत्वादात्मनो हिंसानर्हत्वादिति[3] । ॥ ५ ॥

---

[1] कस्माद्यः—मूलकोशे

[2] तदभाव.=पातकाभावः ।

[3] आत्मनो नित्यत्वाद्धिंसाऽनर्हत्वम् । अत एव तस्य शरीरदाहेऽपि हिंस्यत्वं ब्रुवाणो देवानांप्रियः । एवं चास्तिकमते नित्यत्वादात्मनो न पातकम् ।

[आत्मनित्यत्वपक्षे शरीरादिदाहे दोषः विद्यत एवेति निरूपणम् ]

सिद्धान्तवाद्याह—

न कार्याश्रयकर्तृवधात् ॥ ६ ॥

न ब्रूमो नित्यस्यात्मनो वधो हिंसेति । किं तर्हि कार्यस्य सुख-दुःखोपभोगलक्षणस्य तदाश्रयस्य शरीरस्य कर्तृणां चेन्द्रियाणां वधो हिंसेति ॥ ६ ॥

[प्रासङ्गिकं चक्षुरद्वैतनिराकरणप्रकरणम् ]

इतश्च देहादिव्यतिरिक्त आत्मा—

[1]सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥

सव्येन चक्षुषा दृष्टमर्थं इतरेण चक्षुषा प्रत्यभिजानाति । ततश्चैक-कर्तृकत्वसिद्धिः ।

ननु 'दर्शनस्पर्शनाभ्या'मित्यनेन सिद्धत्वादनारम्भ्यं, न इन्द्रियव्यति-रेकज्ञापनार्थम् ॥ ७ ॥

[2]अथ द्वित्वमाक्षिपति—

---

[1] प्रसङ्गाच्चक्षुरद्वैतप्रकरणमारभते—सव्येति ।

[2] कथता—मूलकोशे

[1] नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥

न चक्षुर्द्वित्वम् । एकं चक्षुः मध्ये नासास्थिव्यवधानाद्द्वित्वाभिमानं, यथा दीर्घस्य द्रव्यस्य मध्ये केनापि व्यवहितस्यान्तावुपलभ्यमानौ द्वित्वाभिमानं प्रयोजयत इति ॥ ८ ॥

अथ परिहरति—

एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥

एकस्मिन्विनष्टे चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते विषयग्रहणलिङ्गम्[2] । तस्माच्चक्षुर्नैकमिति ॥ ९ ॥

पुनराक्षिपति—

[3]अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥

एकस्य वृक्षस्य कासुचिच्छाखासु भग्नासूपलभ्यते वृक्षः । [4][एवमेकस्यावयवस्य विनाशे सर्वावयविनाशानियमेन] चक्षुरुपलब्धिर्न विरुध्यत इति ॥ १० ॥

---

[1] इन्द्रियैकत्वे द्वित्वोपलब्धिः कथं? तत्राह—नैकस्मिन्निति ।

[2] यदि चक्षुरेकमेव तदा विषयग्रहीतुरभावात् तन्नाशे अन्धत्वप्रसङ्गः ।

[3] एकदेशिनः परिहारमाह—अवयवनाशेति ।

[4] [ ] एतच्चिन्हान्तर्गतो भागः, मूलकोशस्य त्रुटितत्वेन मयैवायोजितः ।

दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥

न कारणद्रव्यविभागे कार्यमवतिष्ठते नित्यत्वप्रसङ्गात् । यदि नावतिष्ठते कथं कारणद्रव्यविनाशे कार्यमुपलभ्यत इति । क एवमाहोपलभ्यत इति, अपि तु बहुष्ववयविषु यस्य कारणानि विभक्तानि तद्विनष्टं, यस्याऽविभक्तानि तदुपलभ्यत इति दृष्टान्तविरोधः । तद्विरोधाच्चक्षुर्द्वित्वस्य न प्रतिषेधः ॥ ११ ॥

[ देहादिसङ्घातव्यतिरिक्तात्मनि अनुमानप्रमाणनिरूपणम् ]

अनुमीयते चायं देहादिव्यतिरिक्तश्चेतनः—

इन्द्रियान्तरविकारात् ॥ १२ ॥

कस्यचिदाम्रफलस्य रूपे गृह्यमाणे चक्षुषा रसनेन्द्रियविकारो भवति । कः पुनर्विकारः? रसानुस्मृतौ दन्तान्तरपरिस्रुताभिरद्भी रसनेन्द्रियस्य संप्लवः । सा च स्मृतिरिन्द्रियचैतन्ये न प्राप्नोति । न च प्रतिक्षणविनाशिषु संस्कारेषु अन्यानुभूतस्यान्येनानुस्मरणादिति स्मृतिरसत्यात्मनि सर्वेन्द्रियविषयवेदिनि न भवितुमर्हतीति आत्मसिद्धिः[1] ॥ १२ ॥

एतदाक्षिपति—

---

[1] अयमाशयः—कस्यचिदाम्रफलस्य चिरबिल्वादेरनुभूतस्य तेन सहचरितं गन्धं रूपं वाऽनुभवति । ततस्तत्सहचरितं रसमनुस्मरति, स्मृत्वा चेच्छति, इच्छतो रसनेन्द्रियविकारो दन्तोदकसंप्लवलक्षणः प्रवर्तते, दर्शनाच्चास्येच्छाऽनुमीयते । इच्छया च स्मृतिरसत्यात्मनि सर्वेन्द्रियविषयवेदिनि न भवितुमर्हतीति ।

न स्मृतेः स्मर्तव्यविषयत्वात् ॥ १३ ॥

इयं स्मृतिः स्मर्तव्यार्थसन्निधानादुपजायमाना अपरिदृष्टसामर्थ्यं न स्मर्तारं प्रतिपदयिष्यति । न हि स्वकारणसन्निधानात् प्रादुर्भवन्नङ्कुरोऽपरिदृष्टसामर्थ्यं स्तम्भादिकं प्रतिपादयतीति[1] ॥ १३ ॥

परिहरति—

तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥

तस्याः स्मृतेरात्मगुणत्वे सद्भावादप्रतिषेध आत्मनः । न हीयं स्मृतिरनाधारा युक्ता, गुणत्वात् । न चेयमिन्द्रियाधारा अननुभूतत्वात् । न विषयाधारा । तस्याऽऽपत्वात्[2] । नापि शरीराश्रया शरीरगुणानां स्वात्मपरात्मप्रत्यक्षत्वात् । [3]परिशेषाद्य आधारः स आत्मेति ।

[4]अपरिसङ्ख्यानाच्च स्मृतिविषयस्य । [5][अपरिसङ्ख्यानादानन्त्यात् ।

---

[1] "स्मृतिरसत्यात्मनि सर्वेन्द्रियविषयवेदिनि न भवितुमर्हतीति" न युक्तम् । स्मृतिर्ह्यात्मानं कारणत्वेन वावगमयेत् विषयत्वेन वा । न कारणत्वेन ; स्मृतेः संस्कारजन्यत्वात् । नापि विषयत्वेन, स्मर्तव्यविषयत्वात् । स्मृताच्च तस्मादिन्द्रियान्तरविकारोत्पत्तिरित्यर्थः । तस्मादात्मेन्द्रियाद्यतिरिक्तः न सेत्स्यति ।

[2] विषयो नाधिष्ठानं स्मृतेः ; अचेतनत्वात् । अन्यथा, स्मृतेर्विषयाश्रितत्वेन चैत्रस्य ज्ञानान्मैत्रस्य स्मरणं स्यात् ।

[3] × × × × × × आ—मूलकोशे



[4] पूर्वपक्षिणोऽवधारणं खण्डयति—अपरिसङ्ख्यानादिति ।

तथा च लाघवादतिरिक्त आत्माङ्गीकार्यः। इदमुपलक्षणं—स्मृतेरतीतविषयकत्वाच्छरीरस्य चानित्यतया पूर्वशरीरानुभूतस्य खण्डशरीरे स्मरणं न स्यात्; अन्यथा स्मृतेः पुरुषविशेषीयत्वनियामकाऽलाभश्चेति ध्येयम्] ॥ १४ ॥

[आत्मनः मनोव्यतिरेकोपपादनप्रकरणम्]

नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥ १५ ॥

य एते भवतात्मव्यतिरेकप्रतिपादका हेतव उद्दिष्टाः; सर्वे ते मनसि सम्भवन्ति। एवं च सति न मनो व्यतिरिक्त आत्मा सिध्यतीति ॥ १५ ॥

परिहरति—

ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १६ ॥

यथा ज्ञातारमभ्युपगच्छता ज्ञानसाधनानि चक्षुरादीनीष्यन्ते, तथा मन्तारं प्रतिपद्यमानेन मतिसाधनान्यभ्युपगन्तव्यानि। यच्च तन्मतिसाधनं तन्मन इति संज्ञाभेदमात्रम्[1] ॥ १६ ॥

नियमश्च निरनुमानः ॥ १७ ॥

मतिरसाधना न पुनर्ज्ञप्तिरिति योऽयं नियम आश्रियते। सोऽयं

---

[5] [ ] एतच्चिन्हान्तर्गतो भागः, मूलकोशस्य त्रुटितत्वान्मयैवायोजि।

[1] ततश्च मनः सकर्तृकं करणत्वात् वास्यादिवदित्यनुमानेन मनोभिन्नस्य कर्तुः सिद्धिः।

निरनुमानः। ज्ञप्तिवत्तु मतेः ससाधनत्वेऽनुमानभाव[redacted]। एवं तावत् दात्मनोऽस्तित्वव्यतिरेकौ सिद्धौ। बहुत्वं चात एव [redacted]द्धम्। 1दर्शन- स्पर्शनाभ्यां एकार्थग्रहणादित्याद्याः सर्वा व्यवस्थाश्च शरी[redacted]भेदे सति भवति इति ॥ १७ ॥

[आत्मनित्यत्वसाधनप्रकरणम्]

किं पुनरात्मा देहादिसङ्घातादन्यो नित्योऽनित्[redacted] वेति संशयः। कुतः संशयः उभयथा दृष्टत्वात्। विद्यमानमुभय[redacted] भवति; नित्यं अनित्यं चेति। आत्माऽपि तावत्पूर्वहेतुभिर्विद्यमा[redacted] भवति; अतः संशयः। अत्रात्मसद्भावहेतुभिरेवास्य प्राग्देहभेदादव[redacted]नं सिद्धं भवति। ऊर्ध्वमपि देहभेदादवतिष्ठते। कस्मात्?

पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रति[redacted]त्तेः ॥ १८ ॥

जातः खल्वयं कुमारकोऽस्मिन्जन्मनि इन्द्रियसाम[redacted]र्यादनुभूतेषु हर्ष-भयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यमानो दृष्टः। [redacted]तचकितरुदितानु-मेयान्। ते च स्मृत्यनुबन्धादुत्पद्यन्ते। स्मृत्यनुबन्ध[redacted] पूर्वाभ्यासमन्त-रेण न भवति पूर्वाभ्यासश्च पूर्वजन्मनि सति भवतीति सि[redacted]द्धत्येतत् अवतिष्ठ-तेऽयमूर्ध्वं देहादिति।

एवं नित्यस्यात्मनो जातत्वं नाम शरीरा[redacted]भिरभिसम्बन्धः।

---

1 'दर्शनस्पर्शनाभ्या'मित्युपलक्षणम्। नान्यह[redacted]मन्यः स्मरतीति, शरीरदाहे पातकाभावादिति सेयं व्यवस्था शरीरभेद एव सम्भवतीति ध्येयम्।

अभिप्रेतविषयप्राप्त्या सुखानुभवो हर्षः। अनिष्टविषयोपनिपाते तज्जिहासाऽशक्यताज्ञानं भयम्। इष्टविषययोगे सति तत्प्राप्तावशक्यप्रार्थना शोकः, तदनुभवः सम्प्रतिपत्तिः। अत्रायं प्रयोगः—शोकादि[1]वदात्मवती बाल्यावस्था स्मितरुदितादिमत्वात् यौवनावस्थावदिति ॥ १८ ॥

अनित्येष्वपि विकारदर्शनादनैकान्तिको हेतुरित्याक्षिपति—

**पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः ॥ १९ ॥**

कः पुनरयं प्रबोधः, पद्मस्य किं वा सम्मीलनमिति ? पद्मपत्रावयवविभागोऽविनश्यत्कार्यः प्रबोधः। पद्मपत्रावयवानामारब्धकार्याणां याः पुनः परस्परेण प्राप्तयः तत्सम्मीलनमिति। यथा पद्मादिष्वनित्येषु प्रबोधसम्मीलनविकारा भवन्ति, एवमनित्यस्यात्मनो हर्षभयशोकसम्प्रतिपत्तये विकाराः स्युरिति।

स्यादात्मन उत्पत्तिनिरोधकारणानुमानं तन्न युक्तं, द्रव्यस्य सतः सर्वदाऽमूर्तत्वात्। अकारण आत्मा आकाशादिवदित्यनुमानसिद्धम्। ॥ १९ ॥

अथ पद्मादिसूत्रेण पद्मादिषु प्रबोधसम्मिलनविकारस्याकस्मिकत्वमुच्यते इति चेन्नेत्याह—

**नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ २० ॥**

उष्णादिषु सत्सु भावात् असत्सु चाभावात्तन्निमित्ताः पद्मादिविकाराः

---

[1] बदात्मकी— मूलकोशे

नाकस्मिकाः । एवञ्च सति न किञ्चिद्दृष्टान्तेन प्रतिषिध्यते इति । पञ्चात्मकविकाराणामिति न पञ्चात्मकानि पद्मादीनि, अपि तु पञ्चानां भूतानां अनुग्रहे सति भवन्तीति पञ्चात्मकानीत्युच्यन्ते । वस्तुतस्तु न पञ्चात्मकं किञ्चिदस्तीत्युपरिष्टाद्वक्ष्यामः ॥ २० ॥

इतश्च नित्य आत्मा—

प्रेत्याऽऽहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २१ ॥

जातमात्रस्य वत्सस्य प्रवृत्त्या स्तन्याभिलाषो गम्यते । तत्र प्रवृत्त्यनुमेयः स्तन्याभिलाषः । तेन स्मृतिः, तया संस्कारः । तेनानुभवः तेन पूर्वशरीरमिति । अत एवायमात्मा पूर्वशरीरात्प्रेत्य शरीरान्तरमापन्नः, क्षुत्पीडितः पूर्वाभ्यस्तं स्वजात्यनुगुणमाहारमनुस्मरन् स्तन्यमभिलषति । तस्मान्नित्य आत्मेति किमर्थमिदं सूत्रमारभ्यते? यदाऽयमर्थः पूर्वाभ्यस्तसूत्रेऽवगतः सामान्यतोऽधिगतस्य विशेषज्ञापनार्थ[1]मित्यदोषः ॥ २१ ॥

अथ प्रवृत्तिमात्रस्यानैकान्तिकत्वज्ञापनार्थं[2] सूत्रं—

अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥ २२ ॥

यथा खल्वयोऽभ्यासमन्तमन्तरेणायस्कान्तमुपसर्पति एवमाहाराभ्यासमन्तरेणापि बालः स्तन्यमभिलषतीति ॥ २२ ॥

किमिदमयसोऽयस्कान्ताभिसर्पणं निर्निमित्तमिति? न तावन्निर्निमित्तमित्याह—

---

[1] मिदं सूत्रमित्यदोषः

[2] (भिगमनवत्तदुपसर्पणमिति सूत्रम्)

नान्यत्र प्रवृत्त्यभावात् ॥ २३ ॥

अथ खलु नान्यत्र प्रवृत्तिर्भवति, न हि जात्वयो लोष्टमुपसर्पति । किं कृतोऽयं नियम इति विचारे यद्ययं कारणनियमात्तर्हि स च क्रियानियम-लिङ्गः । एवञ्च बालस्यापि नियतविषयाभिलाषः कारणनियमाद्भवितु-मर्हति । तच्च कारणमभ्यस्तस्मरणादाहाराभिलाष इति ॥ २३ ॥

इतश्च नित्य आत्मेत्याह—

वीतरागजन्मादर्शनात् ॥ २४ ॥

अयं खलु जायमानो रागानुबद्धो जायते । रागस्य च पूर्वानुभूत-विषयानुचिन्तनं योनिः, पूर्वानुभवश्च शरीरमन्तरेण नोपपद्यते इत्यनादि-श्चेतनस्य शरीरयोगो अनादिश्च रागानुबन्ध इति सिद्धं नित्यत्वमिति ॥ २४ ॥

कथं पुनर्ज्ञायते पूर्वानुभूतविषयानुचिन्तनजनितो जातस्य रागः, न पुनः—

सगुणद्रव्योत्पत्तिवदत्तदुत्पत्तिः ॥ २५ ॥

यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणाः कारणत उत्पद्यन्ते, तथोत्पत्तिधर्म-कस्यात्मनो रागः कुतश्चिदुत्पद्यत इति ॥ २५ ॥

तन्नेत्याह—

न, सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ २६ ॥



अत्रापि पूर्ववत् सङ्कल्पस्मृतिसंस्कारपूर्वानुभवपूर्वशरीरवदात्मवत्त्वानि

योन्यानि । एवञ्चानादिः, संसारोऽपवर्गान्तः सिध्यतीति । तस्मादृव्यवस्थितमेतदस्त्यात्मा देहादिव्यतिरिक्तो नैको नित्यश्चेति ॥ २६ ॥

[शरीरपरीक्षाप्रकरणम्]

आत्मानन्तरमवसरप्राप्तं शरीरं परीक्ष्यते । किं पुनरत्र परीक्ष्यं ? किं घ्राणादिवदेकप्रकृति अथ नानाप्रकृतीति । कुतः संशयः ? विप्रतिपत्तेः । तदेवं तत्त्वम्—

पार्थिवं गुणान्तरोपलब्धेः ॥ २७ ॥

मानुषं शरीरं पार्थिवम् । कस्मात् ? गुणान्तरोपलब्धेः । अत्रायं प्रयोगः इदं शरीरं एकात्मकं गन्धवत्त्वात् । यो गन्धवान् स एकात्मकः यथा पार्थिवः परमाणुरिति ।

एवं वरुणादिलोकेषु शरीराणि केवलजलाद्यारब्धानि द्रष्टव्यानि । न त्वेतानि शरीराणि अन्योन्यमसंपृक्तैस्तैस्तैरारब्धानि चेष्टेन्द्रियार्थाश्रयभावेन कल्प्यत इति पञ्चानां भूतानां अविप्रतिषिद्धः संसर्गः ।

[1]पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ॥ २८ ॥

[2]निश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ॥ २९ ॥

[3]गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥ ३० ॥

श्रुतिप्रामाण्याच्च ॥ ३१ ॥

['सूर्यं ते चक्षुर्गच्छता'दिति मन्त्रे 'पृथिवीं ते शरीर'मिति श्रूयते ।

---

[1] सूत्रस्यायमर्थः—'तद्गुणोपलब्धेः', तेषां पृथिवी जलतेजसां गुणानां गन्धस्नेहोष्णस्पर्शानां उपलब्धेरिदं शरीरं पृथिव्यादित्रितयसमवायि.

तदिदं प्रकृतौ विकारस्य लयाभिधानम् । एवं सूर्यं ते चक्षुः स्पृणोमी'ति मन्त्रान्तरे 'पृथिवीं ते शरीरं' स्पृणोमीति श्रूयते सेयं कारणाद्विकारस्य सृष्टिरभिधीयते ।][1] ॥ ३१ ॥

---

कारणकमित्यर्थः । तथा च श्रुतिः—"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, तासां त्रिवृतं त्रिवृतं एकैकं करवाणीति" ।

[2] श्वासनिश्वासौ प्राणवायोर्धर्मविशेषौ । तदुपलक्ष्यश्चातुर्भौतिकम्, पृथिवीजलतेजोवाय्वात्मकमित्यर्थ इत्येके ।

[3] क्लेदो—जलविशेषः । व्यूहो—निश्वासादिः । अवकाशदानं छिद्रम् । तथा च शरीरं पाञ्चभौतिकमिति । न चास्मिन्पक्षे त्रिवृत्करण-श्रुतिविरोधः । तस्य पञ्चीकरणोपलक्षकत्वाभ्युपगमात् । सर्वावकाश-तयाऽऽकाशस्य सर्वाव्यतिरेकात्, सर्वचेष्टाहेतुत्वेन वायोस्सर्वाविनाभूतत्वाच्च-योस्तेजःप्रभृतिष्वन्तर्भावं सिद्धवत्कृत्वा प्रयोगसौकर्यार्थं त्रिवृत्करणं श्रुत्युक्त-मित्यपि वक्तुं शक्यत्वात् ।

[1] [ ] एतच्चिन्हान्तर्गतो भागः ग्रंथलोपान्मयैवापूरि] अत्र श्रुतेर-यमर्थः—'सूर्यं ते गच्छता'दित्यादि प्रेतसंस्कारके मन्त्रे पृथिवीं प्रकृतिभूतां ते शरीरं गच्छतादित्यर्थः । 'सूर्यं ते चक्षुः'रिति गर्भादिसंस्कारमन्त्रे पृथिवीं शरीरं स्पृणोमीति मृदं घटं करोतीतिवत्प्रयोगः ।

[इन्द्रियपरीक्षाप्रकरणम् विंशत्या सूत्रैः]

[1]अथेन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते । [2]किमाव्यक्तिकानि आहोस्विद्भौतिकानि इति । संशयकारणप्रतिपादनार्थं सूत्रं—

कृष्णसारे सत्युपलम्भात् व्यतिरिच्य चोपलम्भात् संशयः[3] ॥ ३२ ॥

कृष्णसारं भौतिकम् । तस्मिन्नुपहते विषयोपलब्धिः कृष्णसारव्यतिरेकेण च विप्रकृष्टदेशावस्थितस्य विषयस्योपलब्धिः, सेयं व्यतिरेकेणोपलब्धिरभौतिकधर्मः । तदेवमुभयधर्मोपलब्धेः सन्देह इति ॥ ३२ ॥

---

[1] परीक्षितं शरीरप्रकरणम् । अथ च इन्द्रियाणां लक्षणसूत्रोक्त भौतिकत्वं विद्यते न वेति परीक्ष्यते । संशयप्रदर्शनार्थमेतत्सूत्रं—कृष्णसारेति ।

[2] आव्यक्तिकानीति । अव्यक्तं प्रधानम् । सत्वरजस्तमसां साम्यावस्था हि प्रकृतिरिति साङ्ख्यानां गृहीतिः नैयायिकानां तु मते इन्द्रियाणि भौतिकानि । तथा चात्र विप्रतिपत्तिः ।

अत्र इन्द्रियाणि भौतिकान्यथाऽव्यक्तिकानीति नैयायिकसाङ्ख्ययोर्विप्रतिपत्तिरित्युपलक्षणम् । तात्पर्यटीकानुसारेण यदापि भौतिकानि तदापि किं कृष्णसारं यदेतदुपलभ्यते तदेवेन्द्रियं, आहोस्वित् तदधिष्ठानं तैजसमित्यपि संशयो द्रष्टव्यः । तत्र पूर्वः संशयः साङ्ख्यनैयायिकयोर्विप्रतिपत्त्या, उत्तरस्तु सौगतनैयायिकयोरिति ध्येयम् ।

[3] सर्वेन्द्रियेषु परीक्षणीयेष्वपि चक्षुर्मात्रमत्राधिकृत्य संशयदर्शनं प्राप्यकारित्वाप्राप्यकारित्वप्रतिहतत्वाप्रतिहतत्वादिभौतिकाभौतिकधर्मविशेषाणां तत्रैव स्फुटोपलम्भादिति ध्येयम् ।

[इन्द्रियाणामभौतिकत्वाशङ्का]

अभौतिकानीत्याह पूर्वपक्षवादे । कस्मात्?—

महदणुग्रहणात् ॥ ३३ ॥

महदिति महत्तरं महत्तमं च उपलभ्यते । यथा न्यग्रोधपर्वतादि । अण्वित्यणुतरमणुतमं च गृह्यते यथा न्यग्रोधधानादि । तदुभयमुपलभ्यमानं भौतिकत्वं चक्षुषो बाधते । भौतिकं हि यावद्भवति तावदेव व्याप्नोति । अभौतिकं तु विभुत्वात्सर्वव्यापकं इति[1] ॥ ३३ ॥

[साङ्ख्यनिरासः]

न महदणुग्रहणमात्रादभौतिकत्वं विभुत्वं चेन्द्रियाणां शक्यं प्रतिपत्तुम् । इदं खलु—

रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम् ॥ ३४ ॥

तयोर्महदण्वोर्ग्रहणं [2]चक्षूरश्मेरर्थस्य च सन्निकर्षविशेषात् भवति यथा प्रदीपरश्मेरर्थस्य चेति । रश्म्यर्थसन्निकर्षश्चावरणलिङ्गः । चाक्षुषो

---

[1] अयमाशयः—गोलकं नेन्द्रियम् । तस्याप्राप्यकारित्वेऽतिप्रसङ्गात् । तथा च भौतिकमेव गोलकातिरिक्तं तद्ग्राह्यम् । तदचारु । न्यूनमहत्परिमाणं हि गृह्यते चक्षुषा । न्यूनेन न महतो सम्भवति व्यापनम् । न चाप्राप्यग्रहणं सम्भाव्यतेऽत आहङ्कारिकाण्येवेन्द्रियाणि ।

[2] चक्षूरश्मेः—गोलकावच्छिन्नतेजसः । तथा च तेनार्थस्य यस्सन्निकर्षविशेषस्तस्मादेव महदण्वोर्ग्रहणं सम्भवति । भौतिकेऽपि प्रदीपे महदणुप्रकाशकत्वम् ।

हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति । यथा प्रदीपरश्मिरिति । तत्र सन्निकर्षमात्रात् सामान्यग्रहणं सन्निकर्षविशेषाद्विशेषग्रहणम् । कः पुनरस्य सन्निकर्षस्य विशेषः । भूयोऽवयवसन्निकर्षोऽनुग्रहः ॥ ३४ ॥

[न चाक्षुषो रश्मिर्विद्यत इत्याक्षेपः]

आवरणानुमेयत्वे च सतीदमाह—

तदनुपलब्धेरहेतुः ॥ ३५ ॥

रूपस्पर्शवद्धि तेजो महत्त्वादनेकद्रव्यवत्त्वाच्चोपलब्धिरिति प्रदीपरश्मिवत् प्रत्यक्षत उपलभ्येत, चाक्षुषो रश्मिर्यदि स्यादिति ॥ ३५ ॥

[प्रत्यक्षानुपलब्धिर्नाभावं साधयतीति निरूपणम्]

नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ३६ ॥

सन्निकर्षप्रतिषेधार्थेनावरणेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धिः, नासावभावं प्रतिपादयति । यथा चन्द्रमसः परभागस्य पृथिव्याश्चाधोभागस्येति ॥ ३६ ॥

[उद्भूतरूपमहत्वादेः प्रत्यक्षहेतुत्वप्रतिपादनम्]

द्रव्यगुण[1]धर्मभेदाच्चोपलब्ध्यनियमः ॥ ३७ ॥

भिन्नः खल्वयं द्रव्यधर्मो गुणधर्मश्च, महदनेकद्रव्यवच्च विषक्तावयव-

---

[1] धर्मभेदादिति । द्रव्यस्य धर्मभेदो महत्त्वादिः गुणस्योद्भूतत्वम् । तथा च महत्त्वोद्भूतरूपादिकं विद्यते तत्रैव प्रत्यक्षं भवति । तद्भावादेवात्र चक्षुरादेरप्रत्यक्षत्वम् ।

माप्यं द्रव्यं प्रत्यक्षतो नोपलभ्यते, रूपं चानुद्भूतं, स्पार्शनेन तु शैत्यं गृह्यते। एवमनुद्भूतरूपस्पर्शो नायनरश्मिः, तस्मान्नोपलभ्यत इति[1] ॥ ३७ ॥

अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ॥ ३८ ॥

तत्र रूपं च द्रव्यं च तदाश्रयः प्रत्यक्षत उपलभ्यते रूपविशेषस्तु यद्भावात्क्वचिद्रूपोपलब्धिः यदभावाच्च द्रव्यस्य क्वचिदनुपलब्धिः स रूपधर्मोऽयमुद्भवसमाख्यात इति। अनुद्भूतरूपश्चायं नायनो रश्मिः, तस्मात्प्रत्यक्षतो नोपलभ्यत इति। दृष्टश्च तेजसो धर्मभेदः, उद्भूतरूपस्पर्शं प्रत्यक्षं तेजो यथा आदित्यस्य रश्मयः। उद्भूतरूपमनुद्भूतस्पर्शं च प्रत्यक्षं यथा प्रदीपरश्मयः। उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षं यथाऽबादिसंयुक्तं तेजः। अनुद्भूतरूपस्पर्शोऽप्रत्यक्षश्चाक्षुषो रश्मिरिति ॥ ३८ ॥

---

[1] एतत्सूत्रानन्तरं अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिरिति सूत्रं मुद्रितेषु दृश्यते। अस्य तात्पर्यटीका, विश्वनाथवृत्तिश्च नोपलभ्येते। इदं तु वैशेषिकदर्शने (अ ४ आ १ सू ८) सूत्रत्वेन गृहीतम्। एतद्ग्रन्थकारेण तु सूत्रस्यास्य वैशेषिकदर्शनवृत्तित्वं मन्यमानेन वाऽन्यथा वा नात्र टीका व्यरचीति सम्भाव्यते। एवमपि अस्य ग्रन्थकर्तुरस्य सूत्रत्वं नानुमतमिति न निश्चिनुमः। 'मध्यन्दिने'ति सूत्रव्याख्यावसरे एतदुल्लेखात्। अतः अत्र व्याख्याऽनुपलब्धिः लेखकप्रमादादेव भवेत् इति। उत्तरत्र अनेकद्रव्येति सूत्रोल्लेखादत्र यथाभाष्यं सूत्रविवृतिः दत्ता।

[चक्षुषः उद्भूतरूपाभावनिरूपणम् ]

कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ३९ ॥

यथा चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च कल्प्यते तथेन्द्रियाणि व्यूढानि । विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः । कल्प्यते सर्वद्रव्याणां च विश्वरूपो व्यूहः, इन्द्रियवत्कर्म कारितः पुरुषार्थतन्त्रः । कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थं इति ।

[1]अव्यभिचारात्तु प्रतीघातो भौतिकधर्मः । यश्चायमावरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतिघातः स भौतिकधर्मः न भूतानि व्यभिचरति । नाभौतिकं किञ्चित्प्रतिघातधर्मकम् । प्रयोगश्च भवति 'चक्षुः भौतिकं प्रतिघातकत्वात् घटादिवत् इति ॥ ३९ ॥

[महतो रूपवतोऽनुपलब्धौ दृष्टान्तनिरूपणम् ]

उपपद्यते च नायनस्य रश्मेरनुपलब्धिः कारणभेदादित्याह—

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ४० ॥

यथा 'अनेकद्रव्येण समवायात् रूपविशेषाच्चोपलब्धि''रिति सत्युपलब्धिकारणे मध्यन्दिनोल्काप्रकाशो नोपलभ्यते, आदित्यस्य प्रकाशेनाभिभूतः, एवं चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरतः । तच्च निमित्तमभिभूतरूपस्पर्शत्वमिति व्याख्यातम् ॥ ४० ॥

---

[1] मूलकोशे त्वस्य सूत्रत्वेन परिगणनं प्रामादिकमेव ।

[लोष्टादौ रश्म्यभावनिरूपणम्]

यत्तु ब्रुवते लोष्टस्यापि प्रकाशोऽस्ति स मध्यन्दिनादित्यप्रकाशान्नोपलभ्यत इति तदुच्चारकं सूत्रं—

[1]न रात्रावप्यनुपलब्धेः ॥ ४१ ॥

अनुमानतश्च नोपलभ्यते लोष्टरश्मिरित्यपिशब्दाद्गम्यते, तदेवं सर्वप्रमाणविनिवृत्तेर्न विद्यते लोष्टरश्मिः, नैवं चक्षुषो रश्मि[2]र्निरनुमानः कुड्यादेरावरणस्य सामर्थ्यादिति ॥ ४१ ॥

[चक्षुषोऽनुद्भूतरूपोपपादनम्]

बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ४२ ॥

दृष्टान्तस्थान एवैतत्सूत्रम्। यत्खलु बाह्यप्रकाशानुग्रहमपेक्षते, तदनुपलब्धिः खलु रूपस्यानभिव्यक्तित इति। अनुद्भूतेर्यथा विषक्तावयवस्याप्यद्रव्यस्य रूपानुद्भूतेरग्रहणम्, तथा चाक्षुषो रश्मिः बाह्यप्रकाशानुग्रहमपेक्षते तस्मादस्यापि रूपस्यानुद्भूतेरग्रहणम् ॥ ४२ ॥

[चाक्षुषो रश्मिरस्तीत्युपपादनम्]

कस्मात्पुनरभिभवोऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यत इति चेत—

अभिव्यक्तौ चाभिभवात् ॥ ४३ ॥

बाह्यप्रकाशानुग्रहनिरपेक्षत्वे चेति चार्थः। यदुद्भूतरूपं बाह्य-

---

1 नेत्यतः परं घटादौ रश्मिरिति योग्यम्।

2 श्मि × × × ×

प्रकाशानुग्रहानपेक्षं च तदभिभूयते। यथा मध्यन्दिने नोल्काप्रकाशः। अनुद्भूतरूपश्च नायनो रश्मिर्बाह्यप्रकाशापेक्षश्च। अतो नाभिभूयते किन्त्वनुद्भूतरूप एवेत्युपपन्नमस्ति चाक्षुषो रश्मिरिति ॥ ४३ ॥

[सदृष्टान्तं चक्षुषो रश्मिरस्तीति निरूपणम्]

**नक्तञ्चरनयनरश्मिदर्शनाच्च ॥ ४४ ॥**

[1][चक्षुषो रश्मिमत्वे दृष्टान्तमाह—नक्तञ्चरेति। वृषदंशादीनां नक्तञ्चराणां गोलके रश्मिर्विद्यते, तद्दृष्टान्तेनान्यत्रापि चक्षुषि तदनुमीयते। अन्यथा नक्तञ्चराणां रात्रौ प्रत्यक्षं न स्यात् ॥ ४४ ॥]

[चक्षुरप्राप्यकारीति शङ्का]

रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणमित्ययुक्तम्, अन्यथापि तद्ग्रहणात्—

**अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४५ ॥**

तृणादि सर्पद् द्रव्यं काचदौ प्रतिहतम् अव्यवहितेन चक्षुषा सन्निकृष्यते। तथापि काचादिव्यवहितमर्थं प्रकाशयति चक्षुः। तस्मान्न प्राप्यकारीति। अत एव चाभौतिकं प्राप्यकारित्वं न भौतिकधर्म इति ॥ ४५ ॥

---

[1] [ ] एतच्चिन्हान्तर्गतभागस्य मूलकोशस्य त्रुटितत्वेन स भागः मयैव पूरितः।

[चक्षुषः अप्राप्यकारित्वे दोषाभिधानम्]

कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४६ ॥

अप्राप्यकारित्वे सतीन्द्रियाणां कुड्यादिभिरन्तरितस्यानुपलब्धिर्न स्यात् ॥ ४६ ॥

[सन्निकर्षोपपादनम्]

ननु प्राप्यकारित्वेऽपि च काचाद्यन्तरितोपलब्धिर्न स्यात्—

अप्रतिघातात्सन्निकर्षोपपत्तिः ॥ ४७ ॥

न काचादि नायनर[1]श्मिं विष्टभ्नाति । काचादिना स्वच्छद्रव्येणाप्रतिघातादप्रतिबन्धात् उपपद्यते सन्निकर्षः ॥ ४७ ॥

[अप्रतिघातार्थनिरूपणम्]

यच्च मन्येत, न भौतिकस्यास्त्यप्रतिघातः सर्वं हि भौतिकं प्रतिघातधर्मकमिति ! तन्नेत्याह—

आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥ ४८ ॥

आदित्यरश्मेरविघाता[2]त, स्फटिकान्तरितेऽप्यविघातात् दाह्येऽविघातात् । अविघातपदाभिसम्बन्धाद्वाक्यभेदः । प्रतिवाक्यं चार्थभेदः । आदित्यरश्मिः कुम्भस्थमुदकं तपति । प्राप्तौ हि द्रव्यान्तरगुणस्योष्णस्पर्शस्य ग्रहणं, तेन च शीतस्पर्शाभिभव इति । स्फटिकान्तरिते

---

1 श्मिं × × × × ×

2 त् × × × × × अ

च प्रकाशनीये दीपरश्मीनामप्रतिघातः प्राप्तप्रकाशनमिति । भर्जनकपाला-दिस्थं च द्रव्यमाग्नेयेन तेजसा दह्यते तस्याप्रतिघातात्प्राप्तिरिति । कोऽय-मप्रतिघाता नाम? अव्यूह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्या-वष्टम्भ इति ॥ ४८ ॥

[अप्रतिघातो न युक्त इत्याक्षेपः]

अत्र पूर्वपक्षवाद्याह—

नेतरेतरधर्मप्रसङ्गात् ॥ ४९ ॥

इतरधर्म इतरत्र प्रसज्यते, इतरधर्मश्चेतरत्र । यद्यविघातः चक्षूरश्मेः स्फटिकादिभिः, कुड्यादिभिरपि प्राप्नोति; कुड्यादिभिर्वा प्रतिघातः, स्फटिकादिभिरपि प्रतिघातः प्राप्नोतीति सूत्रार्थः ॥ ४९ ॥

[पूर्वोक्तशङ्कायाःसमाधिः]

नैष दोष इत्याह—

आदर्शोदकयोः प्रसादस्वाभाव्यात् रूपोपलब्धिवत्
तदुपलब्धिः ॥ ५० ॥

आदर्शो[1]दकयोः प्रसादो रूपविशेषः । स च स्वो भवति नियमात् । कः पुनरयं रूपस्य विशेषः? द्रव्यान्तरसम्पृक्ते द्रव्ये समवायः; तत्स्वाभा-व्यात् प्रसादस्वभावकत्वात् आदर्शादिषु नयनरश्मिः प्रतिहन्यते स च प्रतिहतः प्रतिनिवृत्य स्वमुखेनैव सम्बध्यते । सम्बन्धात् स्वमुखोपलम्भनं प्रतिबिम्बग्रहणाख्यं अत्रादर्शग्रहणं च क्रमेण भवदप्याशुभावान्न विभाव्यते ।

---

[1] शे × × × × × ×

मुखस्यादर्शस्थतया ग्रहणं भ्रान्तिनिबन्धनतन्मुखोपलम्भनमादर्शरूपानुग्रहणात् तन्निमित्तं भवति। आदर्शरूपोपघाते तदभावात्कुड्यादिषु प्रतिबिंबग्रहणं न भवति, द्रव्यस्वभावनियमात्। एवं काचादिभिरप्रतिघातश्च चक्षूरश्मेः कुड्यादिभिश्च प्रतिघात इति ॥ ५० ॥

[प्रमाणसिद्धस्यानुयोगोऽनुचित इत्यभिधानम्]

दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः ॥ ५१ ॥

'प्रमाणस्य तत्त्वविषयत्वात्' दृष्टानुमिताः खल्विमे द्रव्यधर्माः तथाभूता भवन्ति। तथाभूता एव प्रमाणेन प्रतिपद्यन्ते, इमौ च भवता नियोगप्रतिषेधौ देशितौ क्व विषये स्याताम्; न चैतद्युक्तम्। न हि यथा धूमेनाग्निप्रतिपत्तिस्तथोदकप्रतिपत्तिरपि भवत्विति, न चोदकप्रतिपत्तिर्धूमेन न भवतीति अग्निप्रतिपत्तिरप्ययुक्ता। अर्थान्नियुञ्जानो भवानुपेक्षणीयः। प्रतिघाताप्रतिघातयोः खलूपलब्ध्यनुपलब्धी व्यवस्थापिके व्यवहितोपलब्ध्याऽनुमीयते स्फटिकादिभिरप्रतीघातः व्यवहितानुपलब्ध्या च कुड्यादिभिः प्रतीघात इति।

यदि प्राप्यकारि चक्षुर्भवति, अथ कस्मादञ्जनशलाकादि नोपलभ्यते? नेन्द्रियेणासम्बन्धात्—इन्द्रियेण संबद्धा अर्था उपलभ्यन्ते न चाञ्जनशलाकादीन्द्रियेण संबद्धम्। अधिष्ठानस्यानिन्द्रियत्वात्। रश्मिरिन्द्रियं नाधिष्ठानम्। [1]न रश्मिनाऽञ्जनशलाका संबद्धेति ॥ ५१ ॥

[इति इन्द्रियभौतिकत्वचिन्ता समाप्ता]

---

[1] न × × × × × × स्त

[अथ इन्द्रियनानात्वप्रकरणम्]

एवं तावत् भौतिकानीन्द्रियाणीति व्यवस्थितम्। किं पुनरेकमिन्द्रियं आहोस्विन्नैकमिति संशयः। कुतः?—

स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः॥ ५२॥

स्थानान्यत्वे स्थानभेदे, स्थानभेदे घटपटादीनां नानात्वं दृश्यते। नानावयवस्थितस्यावयविन एकत्वमपि दृश्यते। अतः संशयः इन्द्रियाणां नानात्वमेकत्वं वेति॥ ५२॥

[एकमेवेन्द्रियमित्याशङ्का]

एकमिन्द्रियं, किं पुनस्तत्?—

त्वगव्यतिरेकात्॥ ५३॥

कः पुनरयमव्यतिरेकः? सर्वाधिष्ठानसंबन्धः। न हि किञ्चिदिन्द्रियं न त्वचा प्राप्तम्। सतिभावो वा—न ह्यसत्यां त्वचि किञ्चिदर्थग्रहणं भवति। तस्मात्त्वगेकमिन्द्रियमिति।

त्वगभावे विषयग्रहणासंभवेन त्वगेकमेव इन्द्रियमस्तु; न, लोकविरोधात्। विद्यमाने त्वगिन्द्रिये स्पर्शोपलब्धिप्रसङ्गः। इन्द्रियार्थान्तरा रूपादयो न गृह्यन्ते, अन्धादिभिः उपलभ्येरन्; नैवोपलभ्यन्ते, तस्मान्नैकमेवेन्द्रियम्।

त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः। त्वचोऽवयवविशेषः कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्शं गृह्णाति नान्यः। एवं त्वचो अवयव-

विशेषा रूपादिग्राहकास्तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादयः ।

व्याघातादहेतुः । प्रागेकमिन्द्रियमभ्युपगम्येदानीं त्वगवयवविशेषा रूपादिग्राहका इति ब्रुवाणः प्रतिषेध्यमिन्द्रियबहुत्वमभ्यनुजानाति इति व्याघातः । न ह्य[1]वयवानतिरिक्ता त्वगवयवा रूपादिग्राहका भवितुमर्हन्तीति ।

सन्दिग्धश्चाव्यतिरेकः । पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि । न च तेष्वसत्सु विषयग्रहणं सम्भवति । तस्मान्न त्वगन्यद्वा सर्वविषयमेकमिन्द्रियमिति ॥ ५३ ॥

[युगपदर्थानुपलब्धेः नैकमिन्द्रियमिति साधनम् ]

परिहरति—

न युगपदर्थानुपलब्धेः ॥ ५४ ॥

यस्यैकमिन्द्रियं तस्य युगपदर्थानामुपलब्धिः प्रसज्यते । आत्मा मनसा [2]सम्बध्यते । मन इन्द्रियेण ; इन्द्रियं सर्वार्थैः इति । युगपदेव सर्वा बुद्धयः प्रादुर्भवेयुः । न चैतदस्ति । तस्मान्नैकमिन्द्रियं सर्वविषयकम् इति ॥ ५४ ॥

[व्याहतेर्न त्वगेकमिन्द्रियमिति निरूपणम् ]

विप्रतिषेधाच्च न त्वगेका ॥ ५५ ॥

न त्वगेकमिन्द्रियं व्याघाताच्च । रूपादीन्यप्राप्तानि गृह्यन्त इति

[1] य × × × × × त्व

[2] सा × × × × × म

चेत् स्पर्शादिष्वप्येवं प्रसङ्गः । स्पर्शादीनां च प्राप्तानां ग्रहणे रूपादीनामपि प्राप्तानां ग्रहणमिति ॥ ५५ ॥

[यथाकार्यं इंद्रियनानात्वमभ्युपेयम्]

अथ नानात्वस्थापनाहेतुरुपादीयते —

इन्द्रियार्थपञ्चत्वात् ॥ ५६ ॥

अर्थः प्रयोजनं, तत्पञ्चविधमिन्द्रियाणां स्पर्शनेन्द्रियेण स्पर्शग्रहणेन, तेनैव रूपं न गृह्यत इति रूपग्रहणप्रयोजनं चक्षुरनुमीयते । एवमन्येष्वपि द्रष्टव्यम् । एवमिन्द्रियप्रयोजनस्य पञ्चविधत्वात्पञ्चेन्द्रियाणीति ॥ ५६ ॥

[विषयबाहुल्यादिंद्रियसङ्ख्याऽऽनियम इत्याशङ्का]

न तदर्थबहुत्वात् ॥ ५७ ॥

नखल्विन्द्रियार्थपञ्चत्वादिन्द्रियपञ्चत्वं सिद्ध्यति तद्विषयाणां प्रत्येकं बहुत्वादिति । एवञ्च सति बहूनीन्द्रियाणि प्रसज्यन्त इति ॥ ५७ ॥

[इंद्रियार्थपञ्चत्वात् पञ्चेंद्रियाणीति निरूपणम्]

गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५८ ॥

गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्थानां गन्धादीनां यानि ग्रहणानि तान्यसमानसाधनसाध्यत्वान्न ग्राहकान्तराणि प्रयोजयन्ति ; इति न युक्तः प्रतिषेधः इति ॥ ५८ ॥

[सामान्येन सङ्ग्राहकत्वे विषयत्वाव्यतिरेकात्पुनरिंद्रियैकत्वशङ्का]

यदि सामान्यं सङ्ग्राहकं ; विशिष्टानां गन्धादीनां प्राप्तमिन्द्रियाणां —

विषयत्वाव्यतिरेकादेकत्वम् ॥ ५९ ॥

विषयत्वेन हि[1] सामान्येन गन्धादयः सङ्गृहीताः ॥ ५९ ॥

[पूर्वोक्तशङ्कानिरसनपूर्वकं इंद्रियपञ्चत्वनिरूपणम् ]

इन्द्रियाणां नैकत्वं युक्तमिति परिहरति—

न बुद्धिलक्षणाधिष्ठान–गत्याकृति–जातिपञ्चत्वेभ्यः ॥ ६० ॥

न खलु विषयत्वेन सामान्येन कृतव्यवस्था विषया ग्राहकान्तरनिरपेक्षा एकसाधनसाध्या गृह्यन्ते । अनुभूयन्ते तु पञ्च गन्धादयो गन्धत्वादि[2]भिः कृतव्यवस्था इन्द्रियान्तरग्राह्याः । अयमेवार्थोऽनूद्यते बुद्धिलक्षणपञ्चत्वादिति । बुद्धय एव लक्षणानि विषयग्रहणलिङ्गत्वादिन्द्रियाणाम् । [3]तस्मात् बुद्धिपञ्चकत्वात्पञ्चेन्द्रियाणि । गतिभेदादपीन्द्रियभेदः ।

कृष्णसारोपनिबद्धं चक्षुः बहिर्निस्सृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति । स्पार्शनादीनि त्विन्द्रियाणि न गच्छन्ति । विषया एवाश्रयोपसर्पणात् [4]प्रत्यासीदन्ति । सन्तानवृत्त्या शब्दस्य श्रोत्रप्रत्यासत्तिरिति ।

आकृतिः खलु परिमाणं इयत्ता । सा पञ्चधा, स्वस्थानमात्राणि घ्राणरासनस्पर्शनानि विषयग्रहणानुमेयानि । चक्षुः कृष्णसाराश्रितं बहिर्निसृतं विषयव्यापि । श्रोत्रं तु नान्यदाकाशात् तच्च विभु, तदधिष्ठान-

---

[1] हि × × × × × इ

[2] दि कृ

[3] कस्मा

[4] त् × × × × स

नियमेन प्रवर्तते। जातिरिति योनिं प्रचक्ष्महे। "पञ्च खल्विमा इन्द्रिययोनयः पृथिव्यादीनि भूतानींद्रियाणां योनय" इति। योनिरिति तादात्म्यमुच्यते न पुनस्तत्कार्यत्वमाकाशे सम्भवति नित्यत्वात्। [1]तस्मात् आकृतिपञ्चत्वादपि पञ्चेंद्रियाणीति सिद्धम् ॥ ६० ॥

[घ्राणादेः पृथिवीत्वादिमत्वे प्रमाणनिरूपणम्]

कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणीति, [2]नाव्यक्तप्रकृतीनीति? अत्रोक्तमेवोत्तरं स्मारयति—

भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ६१ ॥

दृष्टो हि भूतानां [3]वाय्वादीनां गुणविशेषाभिव्यक्तिनियमः। वायुः स्पर्शव्यञ्जकः, आपो रसव्यञ्जकाः तेजो रूपव्यञ्जकम्। पार्थिवं किञ्चिद्द्रव्यं निम्बादि कस्यचिद्द्रव्यस्य चन्दनस्य वा गन्धव्यञ्जकम्। अस्ति चायमिंद्रियाणां भूतगुणविशेषोपलब्धिनियमः। तेन भूतगुणविशेषोपलब्धेर्मन्यामहे भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति। अत्र प्रयोगः— पार्थिवं घ्राणं गन्धव्यक्तिहेतुत्वात् बाह्यपार्थिवद्रव्यवदिति। एवं शेषेष्वपि ॥ ६१ ॥

[अथ द्वादशभिः सूत्रैरर्थपरीक्षणम्]

गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टं, उद्देशश्च नियोगविकल्पसमुच्चयैः

---

[1] कस्मात्

[2] ति × × × × × अ

[3] बाह्यानाद

समानः। अत्र नियोगः—एकैकगुणत्वम्। विकल्पः—कस्यचिदेकः कस्यचिद्द्वौ इत्येवमादिः, समुच्चयः—सर्वः सर्वत्रेति। अतो विशेषणार्थमुच्यते—

गन्ध-रस-रूप-स्पर्श-शब्दानां स्पर्शपर्यन्ताः पृथिव्याः ॥ ६२ ॥

अप्-तेजो-वायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः ॥ ६३ ॥

स्पष्टोऽर्थः ॥ ६२-६३ ॥

[गुणविनियोगस्यासाधुत्वनिरूपणम्]

उद्देशसूत्रे हि शब्दः पर उद्दिष्ट इति परत्वमेवोत्तरशब्देनोच्यते। अत्र चोदयति—

न सर्वगुणाऽनुपलब्धेः ॥ ६४ ॥

नायं गुणविनियोगः साधुः। कुतः? पार्थिवेन घ्राणेन पार्थिवानां गन्धादीनां चतुर्णामुपलब्धिप्रसङ्गात्। एवमाप्येन रसनेन त्रयाणां, तैजसेन चक्षुषा द्वयोरिति ॥ ६४ ॥

[संसर्गादनेकगुणग्रहणमिति निरूपणम्]

कथं तर्हीमे गुणा विनियोक्तव्याः—

एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ॥ ६५ ॥

गन्धादीनां एकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः। अतस्तदनुपलब्धिः[1]। एकैकस्येति सौत्रो निर्देशः। कथं तर्हि

---

[1] तेषां तयोः तस्य चानुपलब्धिः। घ्राणेन रसरूपस्पर्शानां,

अनेकगुणानि भूतानि गृह्यन्त इत्यताह—

संसर्गाच्च नेकगुणग्रहणम् । अबादिसंसर्गात्पृथिव्यां रसादयो गृह्यन्ते एवं शेषेष्वपि ॥ ६५ ॥

[संसर्गानियमेऽपि गुणे नियमोऽस्तीति निरूपणम्]

नियमस्तर्हि नोपपद्यते पृथिव्यां चत्वारो नेतरेषु संसर्गस्यानियमात् इति, प्राप्नोति । कथं यस्मात्—

विष्टं ह्यपरं परेण ॥ ६६ ॥

[1]अपरं परेण विष्टमबादिना नापरेण [2]परम् । अतः संसर्गविशेषणान्नियम इति ॥ ६६ ॥

[त्रिसूत्र्या प्रत्याख्यानम्]

परिहरति—

न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६७ ॥

नेति त्रिसूत्रीं प्रत्याचष्टे । कस्मात्? पार्थिवस्य च प्रत्यक्षत्वात् । महत्त्वानेकद्रव्यत्वाद्रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं स्यात्, न पार्थिवमाप्यं वा रूपादिभावात् ॥ ६७ ॥

---

रसनेन रूपस्पर्शयोः, चक्षुषा स्पर्शस्येति ।

[1] अपरं—पृथिव्यादि ।

[2] परं—अबादि ।

[रसादेः पृथिव्यादिगुणत्वे घ्राणादिनापि तद्ग्रहणप्रसङ्ग इत्यत्र
नियामकाभिधानम् ]

तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य "न सर्वगुणाऽनुपलब्धेः' इति यच्चोदितं तत्समाधत्ते—

पूर्वपूर्वगुणोत्कर्षात् तत्तत् प्रधानम् ॥ ६८ ॥

तस्मान्न सर्वगुणोपलब्धिः । घ्राणादीनामिन्द्रियाणां पूर्वंपूर्वमिन्द्रियं परस्मात् प्रधानम् । का प्रधानता ? चतुर्गुणत्वादिः । कों गुणोत्कर्षः ? स्वगुणाभिव्यक्तिसामर्थ्यम् । येन गुणेन द्रव्यमुत्कृष्यते स तज्जातीयाभिव्यञ्जकत्वादुत्कृष्टो भवति । यथा बाह्यानां द्रव्याणम् । पार्थिवाप्यतैजसानां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणग्राहकत्वम् । गन्धरसरूपोत्कर्षान्तु यथाक्रमं गन्धरसरूपग्राहकत्वं घ्राणरसनचक्षुषां । तस्मान्न घ्राणादिभिः सर्वेषां गुणोपलब्धिरिति ॥ ६८ ॥

[भूयस्त्वात् घ्राणादींद्रियत्वव्यवस्थितिः]

किं कृतं पुनर्व्यवस्थानं ? किञ्चित्पार्थिवं इन्द्रियं न सर्वाणीति—

तद्व्यवस्थानं तु भूयस्त्वात् ॥ ६९ ॥

अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसंस्कारकारितो भूयस्त्वम् । प्रकृष्टो हि लोके भूयानित्युच्यते यथा पृथगर्थक्रियासमर्थानि पुरुषसंस्कार[1]विषौषधिमणिप्रभृतीनि द्रव्याणि निवर्त्यन्ते । न सर्वं सर्वार्थम् । एवं पृथग्विषयग्रहणसमर्थानि घ्राणादीनि निवर्त्यन्ते इति ॥ ६९ ॥

---

[1] शाद्विशेषणि

[इंद्रियाणां स्वगुणानुपलम्भे हेतुनिरूपणम्]

स्वगुणान्नोपलभन्ते इन्द्रियाणि । कस्मादिति चेत्—

सगुणानामिन्द्रियभावात् ॥ ७० ॥

स्वेन गन्धादिना समानार्थकारिणा सह घ्राणादीनामिन्द्रियत्वात् घ्राणादीनि बाह्यं गृह्णन्ति । स्वगन्धादिग्रहणं च सहकारिवैकल्यात् न भवतीति ॥ ७० ॥

तेनैव तस्याग्रहणाच्च ॥ ७१ ॥

न गुणोपलब्धिरिन्द्रियाणाम् । यो हि ब्रुवते यथा बाह्यं द्रव्यं चक्षुषा गृह्यते तथा तेनैव चक्षुषा गृह्यतां तदेव चक्षुरिति तादृगिदम् । तुल्यो ह्युभयत्र प्रतिपत्तिहेत्वभाव इति ॥ ७१ ॥

[श्रोत्रेण स्वगुणाग्रहणाशङ्का]

अत्र चोदयति—

न शब्दगुणोपलब्धेः ॥ ७२ ॥

स्वगुणान्नोपलभन्ते इन्द्रियाणीत्येतन्न भवति उपलभ्यते हि स्वगुणः शब्दः श्रोत्रेणेति ॥ ७२ ॥

[न श्रोत्रं सशब्दमिंद्रियमिति निरूपणम्]

परिहरति—

तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७३ ॥

अस्यार्थः सत्यमुपलभ्यते श्रोत्रेणाकाशगुणः शब्दः न पुनः श्रोत्रं

सशब्दमिन्द्रियं यथेतराणि सगुणानि इन्द्रियाणि नैवमाकाशकम्। कस्मात्? शब्दस्य इतरगुणवैधर्म्यात्–आकाशस्येतरद्रव्यवैधर्म्यात्। न हि शब्द एव शब्दस्य व्यञ्जकः, नाकाशं सगुणमिन्द्रियमिति ॥ ७३ ॥

इति न्यायसूत्रविवरणे तृतीयाध्यायस्य प्रथममाह्निकम्
संपूर्णम्।

## अथ न्यायसूत्रविवरणे तृतीयाध्याये द्वितीयमाह्निकम्

[बुद्ध्यनित्यताप्रकरणम्]

[तत्र संशयप्रदर्शनम्]

परीक्षितानि इन्द्रियाणि तदर्थाश्च। बुद्धेरिदानीं परीक्षा[1]। सा किं नित्याऽनित्या वेति। कुतः संशयः?

**कर्माकाशसाधर्म्यात्संशयः॥ १॥**

कर्म क्रिया। आकाशः प्रसिद्धः। अस्पर्शत्वं तयोः समानधर्म उपलभ्यते [2]बुद्धौ। ततः संशयः इति॥ १॥

[नित्या बुद्धिरित्याशङ्का]

अत्र साङ्ख्या प्रवदन्ति, नित्या बुद्धिरिति[3] साधनं च प्रचक्षते—

---

[1] परीक्षेति। बाह्यप्रमेयपरीक्षा समाप्ता। इदानीं पुनरान्तरप्रमेयपरीक्षा वर्तिष्यते। शरीरावच्छेदव्याप्यभोगानुकूलसम्बन्धवद्वृत्तिकारणप्रमेयविभाजकोपाधिमत्प्रमेयपरीक्षैव द्वितीयाह्निकार्थः। बुद्धिपदं मनसोऽप्युपलक्षकम्।

[2] × × × त

[3] अयमाशयः साङ्ख्यानाम्। "पुरुषस्यान्तःकरणभूता नित्या बुद्धि"रिति बुद्धेरन्तःकरणरूपायाः नित्यत्वमभ्युपगतम्। योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामीति प्रत्यभिज्ञानमेकं वृत्तिमन्तं विषयीकरोति। न चात्मा तादृशः। तस्य निर्विकारत्वात्। बुद्धिरेव वृत्तिमती तद्विषया। वृत्तिश्च तस्याः परिणामः। नित्यभूताया बुद्धेराविर्भावतिरोभावावेव न तूत्पादविनाशाविति।

विषयप्रत्यभिज्ञानात् ॥ २ ॥

यमहं पूर्वमज्ञासिषं तमहमिदानीं जानामीति ज्ञानयोस्समानेऽर्थे प्रतिसन्धानं प्रत्यभिज्ञानम् । अवस्थितायाः बुद्धेरुपपन्नं—लिङ्गमेकत्वे । बुद्धिनानात्वे तु प्रत्यभिज्ञाऽनुपपत्तिः ; यथा पुरुषान्तरबुद्धिषु ॥ २ ॥

[पूर्वोक्ताशङ्कानिरसनेनाऽऽत्मा नित्य इति निरूपणम् ]

दूषणमाह—

साध्यसमत्वादहेतुः ॥ ३ ॥

यथा खलु नित्यत्वं बुद्धेः साध्यमेवं प्रत्यभिज्ञानमपि । किं कारणं ? पुरुषधर्मः खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोधः । चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानाति ; नान्तःकरणम् । ततश्चेतनस्यैतद्धेतोः नित्यत्वं युक्तमिति ॥ ३ ॥

[वृत्तिवृत्तिमतोरभेददूषणम् ]

यच्चेदमुच्यते बुद्धेरवस्थितायाः यथाविषयं वृत्तयः प्रादुर्भवन्ति, ज्ञानशब्दवाच्याः । [1]वृत्तिश्च वृत्तिमतो नान्येति ; तच्च न—

न युगपद्ग्रहणात् ॥ ४ ॥

[2]वृत्तिवृत्तिमतोरनन्यत्वे तदभिन्नानां वृत्तीनामप्यवस्थानमिति यानी-

---

[1] व्यक्तय

[2] × × × × × × × × × त

मानि विषयग्रहणानि [1]तानि अवतिष्ठन्त इति युगपद्विषयाणां ग्रहणं प्रसज्यते । न च तदस्तीति[2] ॥ ४ ॥

अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ५ ॥

वृत्तीनामपगमे वृत्तिमतोऽप्यपगम इति सूत्रार्थः ॥ ५ ॥

[मनसः विभुत्वमतदूषणम्]

[3]अविभु चैकं मनः पर्यायेणेन्द्रियैः सम्बध्यत इति—

क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥

इन्द्रियार्थानाम् । वृत्तिवृत्तिमतोर्नानात्वात् इति सूत्रार्थः । एकत्वे तु प्रादुर्भावतिरोभावयोरभाव इति ॥ ६ ॥

[4]अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥

विषयान्तरव्यासक्ते मनसि कस्यचिदर्थस्यानुपलब्धि[5]र्वृत्तिवृत्तिमतोर्भेदे सत्युपपद्यत इति सूत्रार्थः । एकत्वे त्वनर्थको व्यासङ्गः इति ॥ ७ ॥

विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगः—

---

[1] × × अ

[2] वृत्तिवृत्तिमतोरभेदे वृत्तिमदवस्थित्या वृत्तेरप्यवस्थितिर्वाच्या । तथा च सर्वपदार्थग्रहणं युगपत्स्यात् । न चैवम् । तस्मान्नाभेद इति ।

[3] × × × चै

[4] अप्रत्यभिज्ञानं—तत्तदिन्द्रियजन्यज्ञानाभावः ।

[5] × × × × × × त

न गत्यभावात् ॥ ८ ॥

प्राप्तानीन्द्रियाण्यन्तःकरणेनेति प्राप्त्यर्थस्य गमनस्याभावः । तत्र च युगपत् ग्रहणप्रसङ्गः । न च युगपत्प्रत्ययोत्पत्तौ प्रमाणमस्ति ; येन प्रमाणेन प्रतिषिद्धमपि प्रत्ययौगपद्यं प्रतिपद्येत । यदा किञ्चित्प्रतिषिद्धमपि प्रतिपद्यते । यथा चक्षुषो गतिः । सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात् । यस्मात्सन्निकृष्टं पाणिं विप्रकृष्टं चन्द्रमसमेकस्मिन्काले चक्षुः प्रतिपद्यते । तस्मान्न गतिमच्चक्षुरिति प्रतिषिद्धा सती गतिर्व्यवधानप्रतिघातेनानुमीयते । न च युगपत्प्रत्ययोत्पत्तौ प्रमाणमस्ति ।

एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः । कः पुनरयं व्यासङ्गः ? अभीविषष्टयो अनेकविज्ञानोत्पादः । स च पुरुषस्य नान्तःकरणस्येति ॥ ८ ॥

[वृत्तिवृत्तिमतोरभेदेपि भेदप्रत्ययोपपादनम् ]

एकमन्तःकरणं नाना वृत्तय इति सत्यभेदे वृत्तेरिदमुच्यते[1]—

स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ॥ ९ ॥

जपाकुसुमसन्निधाने तद्गतधर्मा स्फटिके प्रतिभासन्ते । तदा स्फटिक एव तदन्यत्वारोपः सम्भवति यथा तथैव एकस्या एव बुद्धेर्विषयेन्द्रियसन्निकर्षवशान्नानाविधविषयसम्बन्धान्नानात्वारोप इति ॥ ९ ॥

---

[1] इतः परं 'शरीरव्यापित्वा'दिति सूत्रान्तो ग्रन्थः लेखकप्रमादादन्यथा वा नोपलभ्यते मूलकोशे । अत इतः परं मयैव भाष्यादिव्याख्यानानुगुण्येन तदापूरि बालेन । हंसक्षीरन्यायेन विदुषो गुणमात्रं गृह्णीयुरिति सादरं सविनयं प्रार्थये ।

[पूर्वोक्तशङ्कानिरासः]

सिद्धान्तयति—

## [1]न हेत्वभावादिति ॥ १० ॥

एकस्यामेव बुद्धौ नानात्वारोप इति न युक्तमुक्तम्। बुद्धेरेकत्वसाधकाभावात्; नानात्वस्य प्रत्यक्षसिद्धत्वेनान्यथाकल्पकाभावात् ॥ १० ॥

[बौद्धानां क्षणिकत्वाशङ्का]

स्फटिके नानात्वं भ्रम इत्युक्तं, तदसहमानः ज्ञानज्ञेययोः क्षणिकत्ववादी प्रत्यवतिष्ठते—

## स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ ११ ॥

बुद्धिग्रहार्थमपीत्युक्तम्। व्यक्तीनां क्षणिकत्वेन प्रतिक्षणमपि अपरापरोत्पत्तेः। पूर्वस्फटिकनाशेन स्फटिकान्तरमेवोत्पद्यत इति यावत्। क्षणिकता च भावानां स्वोत्पत्तिद्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। न च सतां क्षणिकत्वमप्रामाणिकम्। उपचयाऽपचयादिना प्रतिक्षणं शरीरे तदनुभवात् ॥ ११ ॥

---

[1] 'न हेत्वभावादिति' भाष्यं व्याचष्टे यथाश्रुति सूत्र इतीति तात्पर्यटीका। अत इदं भाष्यमेवेत्येके। तच्चिन्त्यम्। अत्र 'स्फटिकान्यत्वाभिमानवत् तदभिमान' इति सौत्रपूर्वपक्षे सौत्र एव सिद्धान्तः साधीयान् इति सिद्धान्तसूत्र एवायम्; 'न हेत्वभावादिति'। भाष्यमिति टीका च सूत्रव्याख्यानपरभाष्याभिप्रायेणापि सङ्गच्छत इत्याहुरिति न्यायसूत्रनिबन्धप्रकाशे वर्धमानोपाध्यायलेखदर्शनात्।

[बौद्धोक्तमतनिरतनपूर्वकं अर्थानां स्थायित्वनिरूपणम् ]

बौद्धोक्तं दूषयति—

नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ १२ ॥

'स एवायं स्फटिकः' 'सोऽयं देवदत्तः' इत्यादि प्रत्यभिज्ञानुरोधेन विनाशहेत्वभावात्पदार्थानां स्थैर्यमभ्युपेयम् ॥ १२ ॥

सतामक्षणिकत्वे स्थायित्वे चोपपत्त्यन्तरं—

नोत्पत्तिविनाशकारणोपपत्तेः ॥ १३ ॥

न स्फटिकादेः शक्यमभ्युपेतुं क्षणिकत्वम् । पदार्थानां उत्पत्तिविनाशौ उत्पत्तिविनाशकारणकाविति सर्वसम्मतोऽर्थः । प्रकृते च स्फटिकादीनां प्रतिक्षणमुत्पत्तिविनाशाभावादेवाक्षणिकत्वं सिद्ध्यति ॥ १३ ॥

[क्षणभङ्गवादिनः पुनराशङ्का]

पुनराक्षिपति—

क्षीरविनाशकारणाऽनुपलब्धिवद्दध्युत्पत्तिवच्च तदुत्पत्तिः ॥ १४ ॥

क्षीरविनाशकारणं नोपलभ्यते; क्षीरं च विनश्यति । एवं दध्युत्पत्तिकारणं नोपलभ्यते ! तथाप्युत्पद्यते दधि । तद्वत्पूर्वस्फटिकनाशकारणोत्तरस्फटिकोत्पत्तिकारणाऽनुपलब्धावपि पूर्वविनाशः अपरस्य चोत्पत्तिर्भवतीत्यर्थः ॥ १४ ॥

[कारणवत्त्वहेतोः क्षणभङ्गवादनिरसनम् ]

सिद्धान्तमाह—

लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १५ ॥

क्षीरविकारे दधिभावे च विद्यते हेतुः प्रत्यक्षसिद्धः । तस्मादेव तत्र कारणाऽनुपलब्धिरनुपपन्ना । स्फटिकस्य प्रतिक्षणोत्पत्तिविनाशे तु नास्ति हेतुः । तस्मादयं वादोऽनुपपन्न एव ॥ १५ ॥

[क्षणभङ्गवादे साङ्ख्यमतेन पूर्वपक्षः]

साङ्ख्यं दूषयितुमाह—

न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १६ ॥

न हि क्षीरनाशो दध्युत्पत्तिरित्यनर्थान्तरम् । किन्तु क्षीरस्य परिणामेन [पूर्वगुणनाशेन] गुणान्तर [रसान्तर] प्रादुर्भाव एव दधि । एवं चैतद् दृष्टान्तानुगुण्येन स्फटिकादेरुत्पत्तिविनाशकल्पनमयुक्तम् ॥ १६ ॥

[साङ्ख्यवादनिरासः]

मतमिदं दूषयति—

व्यूहान्तराद्द्रव्यान्तरोत्पत्तिः पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ १७ ॥

व्यूहान्तरात्— रचनान्तरात् । द्रव्यान्तरोत्पत्तौ तस्मिन्नेव काले द्रव्यान्तरस्थितेर्विरुद्धत्वेन पूर्वनाशं विना द्रव्यान्तरोत्पत्तिरिति न साधीयान् पक्षः । ततश्च विद्यमाना द्रव्यान्तरोत्पत्तिरेव पूर्वद्रव्यनाशज्ञापिका ॥ १७ ॥

[विनाशोत्पादावकारणकावित्यत्र व्यभिचारप्रदर्शनम् ]

पुनरपि सौगतमतं प्रत्याख्याति—

क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १८ ॥

क्वचित् ग्रीष्मादौ क्षीरविनाशेन दध्युत्पादे विनाशकारणाऽनिर्णयात् क्वचिच्चाम्लद्रव्यसंयोगेन क्षीरादिविनाशेन दध्युत्पादेऽनेकान्तः सकारणकत्वस्य व्यभिचारसंशयः। न च सकारणकत्वनिश्चयविरोधी व्यभिचारनिर्णयस्य विरोधित्वात् इति भावः इत्येके।

यद्वा सौगतोक्तदिशा क्षीरदधिदृष्टान्तेन अकारणकावेवात्रोत्पाद-विनाशाविति न युक्तं घटादौ सकारणकत्वोपलब्धेर्व्यभिचारादिति ॥ १८ ॥

[बुद्धेरात्मगुणत्वपरीक्षा]

प्रागबुद्धेरात्मगुणत्वं प्रत्यपादि। इदानीं शिष्यबुद्धिवैशद्यायास्यैव परीक्षा वर्तिष्यत इति—

नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १९ ॥

न बुद्धिरिन्द्रियाणां अर्थस्य वा गुणः। तत्तदिन्द्रियादिनाशेऽपि तत्तदिन्द्रियाहितसंस्कारेण ज्ञानसद्भावेन स्मरणोपपत्तेः। अनुभवितुरभावे तु न स्मरणमुपपद्यतेऽतिप्रसङ्गात् ॥ १९ ॥

[ज्ञानं न मनसो गुणः]

नापि मनोगुणः—

युगपज्ज्ञानानुपलब्धेश्च मनसः ॥ २० ॥

नेति पूर्वसूत्रादनुवर्तते। तथा च न मनसोऽपि गुणः इति सम्पन्नम्। तत्र हेतुः—'युगपज्ज्ञानानुपलब्धे'रिति। कायव्यूहस्थले

युगपदेव नानाशरीरावच्छेदेन ज्ञानानुत्पादप्रसङ्गान्मनसोऽणुत्वेन नानाशरीरसम्बन्धस्यैकदाऽसम्भवात्[1] ॥ २० ॥

[बुद्धेरात्मगुणत्वेऽपि ज्ञानयौगपद्यं तुल्यम् इत्याशङ्का]

शङ्कते—

तदात्मगुणत्वेऽपि तुल्यम् ॥ २१ ॥

बुद्धेरात्मगुणत्वे ज्ञानयौगपद्यं तुल्यमेव । सर्वेन्द्रियसम्प्रयोगस्यात्मनो विद्यमानत्वात् ॥ २१ ॥

समाधत्ते—

[2]सन्निकर्षाभावात्तदनुत्पत्तिः ॥ २२ ॥

इन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्ववत् आत्ममनःसंयोगस्यापि तत्कारणत्वमव्याहतम् । तस्य चायौगपद्यमणुत्वान्मनसः । अयौगपद्यादनुत्पत्तिर्युगपज्ज्ञानानामात्मगुणत्वेऽपीति ॥ २२ ॥

[बुद्धेरात्मगुणत्वे पुनराक्षेपः]

आक्षिपति—

---

1 'युगपज्ज्ञेयानुपलब्धेश्च न मनसः' इति प्रचलितः भाष्यादिसम्मतः पाठः । तस्मिंश्च युगपज्ज्ञेयानुपलब्धिकारणत्वेन सिद्धस्य मनसो न कर्तृत्वमिति सूत्रार्थः ।

2 "इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः" इति प्रचलितः भाष्यादिसम्मतः पाठः । अर्थस्तु पाठेऽस्मिन्स्पष्ट एव ।

नोत्पत्तिकारणाऽनुपदेशात् ॥ २३ ॥

बुद्धिर्नात्मगुणः । उत्पत्तिकारणाऽनुपदेशात् । बुध्युत्पत्तौ कारणस्यानुक्तत्वादित्यर्थः । आत्ममनःसंयोगस्य कारणत्वे ज्ञानस्य सार्वदिकत्वप्रसङ्गः ॥ २३ ॥

बुद्धेरात्मगुणत्वे दोषमाह—

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २४ ॥

यद्यात्मगुणो बुद्धिर्भविष्यति तदा विनाशकारणाभावादस्या नित्यत्वं स्यात् । विनाशश्च बुद्धेस्तदा भवेत् यदाऽश्रयस्याऽत्मनो विनाशः स्यात् । न चैतद्ध्रियते नापि विरोधिगुणान्तरोत्पादेन । तस्याऽऽभावात् । तस्माद्बुद्धिर्नित्या स्यात् ॥ २४ ॥

[बुद्धेरात्मगुणत्वे बाधकनिरासः]

उत्तरमाह—

अनित्यत्वग्रहणाद्बुद्धेर्बुध्यन्तराद्विनाशः शब्दवत् ॥ २५ ॥

बुद्धेरुत्पादविनाशयोरानुभविकत्वात् स्वोत्तरोत्पन्नबुध्या पूर्वबुद्धेर्विनाशाङ्गीकारात् ।

नन्वेवं चरमबुद्धेर्विनाशः कथं? स्वस्मादेवेति ब्रूमः । यथा स्वोत्तरोत्पन्नशब्दस्य पूर्वपूर्वनाशकत्वं चरमशब्दस्य स्वस्मादेव विनाशः; एवमेव प्रकृतेऽपीति ध्येयम् ।

यद्वा अदृष्टनाशात्कालाद्वा शब्दनाशः सम्भवति यथा, तथैव निमित्त (संस्कारादि) नाशाद्बुद्धेरपि विनाशसम्भवात् ॥ २५ ॥

[स्मृतियौगपद्यचिन्तायां एकदेशिनः परिहारः]

बुद्धेरात्मगुणत्वे संस्कारमनोयोगयोर्विद्यमानत्वेन स्मृतीनां पूर्वानुभूत-यावद्वस्तुविषयकत्वं स्यादित्यत्र कस्यचित्समाधानं दूषयितुमनुवदति—

ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २६ ॥

ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदं संस्कारपरम्। तत्समवेतः तत्सम्बद्ध इति यावत्। तदात्मको य आत्मप्रदेश आत्मसम्बन्धी तदवच्छेदेन सन्निकर्षात् इत्यर्थः। तथा च यद्विषयावच्छेदेनात्ममनोयोगो वर्तते तद्विषयस्यैव स्मरणं न सर्वस्येति भावः ॥ २६ ॥

[प्रागुक्तमतदूषणम्]

दूषयति—

नान्तःशरीरवृत्तित्वान्मनसः ॥ २७ ॥

मनसोऽन्तःशरीरवृत्तित्वेन शरीरातिरिक्तावच्छेदेनात्ममनोयोगस्य ज्ञानाऽजनकत्वेन च प्रागुक्तदोषतादवस्थ्यम् ॥ २७ ॥

[एकदेशिनः शङ्का]

शङ्कते—

साध्यत्वादहेतुः ॥ २८ ॥

शरीरावच्छिन्नात्ममनोयोगो न हेतुः। साध्यत्वादसिद्धत्वान्माना-भावाच्चेति यावत् ॥ २८ ॥

[शङ्कानिरसनपूर्वकं मनसः शरीरवृत्तित्वनिरूपणम् ]

शङ्कां निरस्यति—

स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २९ ॥

उक्तः प्रतिषेधो न युक्तः । सुस्मूर्षोः शरीरधारणसद्भावात् । मनसो बहिर्भावे धारकस्य प्रयत्नस्याभावात्, गुरुत्वाच्च शरीरस्य पतनं स्यात् ॥ २९ ॥

[शरीरबहिर्भावेऽपि मनसः शरीरधारणोपपत्तिशङ्का]

पुनरपि शङ्कते—

न तदाशुगतित्वान्मनसः ॥ ३० ॥

शरीरधारणं मनस उपपद्यते । शीघ्रगतिमत्वात्तस्य । शरीराद्बहिर्निर्सृतं मनः पुनः शीघ्रमेव प्रत्यावर्ततेऽतो स्मरणं धारणं चेत्युभयमपि सिध्यति ॥ ३० ॥

[स्मरणकालानियमेन मनसः शरीरानन्तर्गतत्वे अनुपपत्तिसमर्थनम् ]

दूषयति—

न स्मरणकालाऽनियमात् ॥ ३१ ॥

न शरीरधारणं युज्यते मनसः । स्मरणकालाऽनियमात् । यदा कदाचित्स्मरणधाराऽसम्भवेन, तदा शरीरे मनसोऽपरावृत्तत्वेन शरीरधारणं न स्यात् ॥ ३१ ॥

['ज्ञानसमवेते'त्यादि सूत्रोक्तमेकदेशिमतं निराकरिष्णो एकदेशिनः शङ्का]

अत्र कस्यचिद्दूषणमाह—

आत्मप्रेरण-यदृच्छा-ज्ञताभिश्च न संयोगविशेषः ॥ ३२ ॥

मनसो हि बहिःप्रदेशे विषयेण संयोगविशेषस्त्रेधा स्यात्—आत्मप्रेरणेन, यदृच्छया, ज्ञतया वा। नाद्यः तस्य स्मरणीयज्ञानपूर्वकतया प्रागेव स्मरणापत्तेः। न द्वितीयः; आकस्मिकत्वे मनोगमनस्य जगतोऽपि तथात्वं स्यात्। न तृतीयः ज्ञातृत्वं न मनसो धर्म इति प्रागेवोपादितम्। ॥ ३२ ॥

[पूर्वोक्तशङ्कानिरासः]

दूषणं परिहरति—

व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३३ ॥

नृत्यादिकं पश्यतो कण्टकादिना पादव्यथनेन मनः संयोगो यथा जायते; तथैवात्रापीति भावः। अन्यथा मनःसंयोगेऽप्युक्तदोषाः स्युः। अदृष्टविशेषकल्पनेन दोषोद्धारे, अत्रापि समम् ॥ ३३ ॥

[स्मरणायौगपद्यमुपपादयति]

स्मरणाऽयौगपद्यमुपपादयति—

प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावात् युगपदस्मरणम् ॥ ३४ ॥

प्रणिधानं चित्तैकाग्र्यं—सुष्मूर्षेति यावत्। ज्ञानपदोत्तरमादिपदं योज्यं; तेन लिङ्गज्ञानादीनामित्यर्थः सम्पन्नः। लिङ्गज्ञानमुद्बोधकम्।

आदिपदं इच्छा संस्कारादिग्राहकम् । अयुगपद्भावात्—क्रमेणोत्पादनात् । तथा च यदि युगपदुद्बोधकानि भवन्ति तदा तावद्विषयकमपि स्मरणमिष्यत एव । यथा पदज्ञानादौ ॥ ३४ ॥

[ज्ञानेच्छादीनां वैय्यधिकरण्यनिरासः]

ज्ञानं पुरुषधर्मः । इच्छादयस्त्वन्तःकरणधर्माः । यथा च साङ्ख्यानां गीतिः—"पुरुषचैतन्यमेकमेव कूटस्थनित्यं सत् तत्तदर्थाकारपरिणत-बुद्धितत्वप्रतिबिंबविभ्रमवशाद्भिन्नमिवोपजनापायधर्मकं विज्ञानमिति वृत्तिरिति चाख्यायते । इच्छाद्वेषादयस्तु वस्तुत उपजनापायधर्माणो अन्तःकरणस्येति दर्शनम्" । तदेतन्मतं निराकर्तुमाह—

ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३५ ॥

ज्ञस्य ज्ञातुरात्मनः । आरम्भनिवृत्त्योः—प्रवृत्तिनिवृत्त्योः । इच्छा-द्वेषनिमित्तत्वं विद्यत इति भावः । प्राप्तीच्छाप्रयुक्तस्यात्मनो सुखसाधना-वाप्तये यःसमीहाविशेषः प्रारभ्यते स—आरम्भः । जिहासाप्रयुक्तस्य दुःखसाधनपरित्यागो निवृत्तिः । तथा च प्रवृत्तिं प्रतीच्छाया निवृत्तिं प्रति द्वेषस्य च सामानाधिकरण्येन हेतुत्वादात्मनो ज्ञस्येच्छाश्रयत्वमभ्युपेयं ; नान्तःकरणस्य । एवं चैककर्तृकत्वं ज्ञानेच्छाप्रयत्नसुखदुःखादीनां समानाश्रयत्वं च । तस्माज्ज्ञस्यैव सुखदुःखेच्छादयो धर्मः नान्तःकरण-स्येति ॥ ३५ ॥

[ज्ञानादीनां पार्थिवादिपरमाणुपुञ्ज एवाश्रयोऽस्त्विति शङ्का]

नन्वस्तु ज्ञानेच्छादीनां सामानाधिकरण्यम् । परमेषामधिकरणं परमाणुपुञ्ज एव स्यादिति शङ्कते—

**तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ ३६ ॥**

पार्थिवादिदेहेषु ज्ञानादिप्रतिषेधः न शक्यते कर्तुम्। कुतः? इच्छाद्वेषयोः आरम्भनिवृत्तिलिङ्गत्वात्। तयोश्चेष्टाविशेषलिङ्गत्वाच्चेष्टायाश्च शरीरे प्रत्यक्षादिमानसिद्धत्वात् ॥ ३६ ॥

समाधानार्थं प्रतिबन्दिमाह—

**परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३७ ॥**

आरम्भनिवृत्त्याधारत्वेनैव यदि ज्ञानाद्यधिकरणत्वं शरीरस्याभ्युपगम्यते तर्हि उद्यमननिपतनरूपारम्भनिवृत्तिदर्शनात्परश्वादिष्वपि ज्ञानाद्याधारत्वप्रसङ्गः। तथा च पार्थिवाद्येष्वप्रतिषेध इति परस्योक्तमनेकान्तमिति भावः ॥ ३७ ॥

चेतनाचेतनयोश्चेष्टानियमं निरूपयति—

**नियमाऽनियमौ तु तद्विशेषकौ ॥ ३८ ॥**

नियमः—प्रवृत्त्यादेर्जन्यता। अनियमः, तज्जन्यतातिरिक्तः पदार्थः तौ। तद्विशेषकौ—तदितरेतरव्यावर्तकौ। तथा च समवायेन ज्ञानेच्छादयश्चेतनधर्माः। अवच्छेदकतया शरीरे तेषां जन्यजनकभावः। परश्वादौ तु यत्नविषयतया क्रिया इति भेदः ॥ ३८ ॥

[इच्छादीनां मनोगुणत्वाभावे युक्त्यन्तराभिधानम्]

**नेच्छादयो मनोगुणा इत्याह—**

**यथोक्तहेतुत्वात्पारतन्त्र्यात्स्वकृताभ्यागमाच्च न मनसः ॥ ३९ ॥**

इच्छादय इति शेषः। यथोक्तहेतुत्वात्—ज्ञानेच्छादीनां सामानाधिकरण्येन हेतुहेतुमद्भावात्। पारतन्त्र्यात्—मनसश्चेतनसहकारित्वात्। इच्छादयो न मनसो गुणा इति भावः।

अत्रैव हेत्वन्तरं—'स्वकृताभ्यागमादिति' स्वकृतात्कर्मणोऽभ्यागमो भोगः। मनसः कृत्यादिमत्त्वे कर्मणः स्वकृतत्वाभावेन ज्ञस्य सुखादिभोगो न स्यात्। तस्मान्न मनो ज्ञानेच्छाद्याश्रयः। किन्तु ज्ञ एव तादृशः ॥ ३९ ॥

[परिशेषादात्मन एव इच्छाद्याश्रयत्वोपपादनम्]

उपसंहरति—

**परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४० ॥**

प्रसक्तप्रतिषेधे अन्यत्राऽप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः—परिशेषः। तथा च भूतेन्द्रियमनसां प्रतिषेधे, अन्यत्राप्रसङ्गाच्छिष्यमाणे आत्मनि संप्रत्ययः—ज्ञानाश्रयत्वनिर्धारणं 'परिशेष' इत्यर्थः। एवं 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्यादीनामुपपत्तेः—उपपन्नत्वात् आत्मा इच्छाद्याश्रय इति युक्तमुक्तम् ॥ ४० ॥

[स्मृतेरात्मगुणत्वस्य समर्थनम्]

शिष्यबुद्धिवैशद्याय स्मृतेरात्मगुणत्वं निरूपयाह—

स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४१ ॥

स्मरणमात्मन एव गुणः। कुतः? ज्ञस्वाभाव्यात्। ज्ञानवत्स्वाभाव्यात्। ज्ञानत्वावच्छिन्नवत्त्वं ह्यात्मनो स्वभावः। स्मृतेश्च बुद्धिसन्तानधर्मत्वे 'अहं जानामी'त्याद्यनुभवविरोधः ॥ ४१ ॥

[स्मृतिहेतूनामभिधानम्]

स्मृतिहेतूनामयौगपद्यादस्मरणमित्युक्तं तत्र स्मृतिहेतूनाह—

प्रणिधान-निबन्धाभ्याम-लिङ्ग-लक्षण-सादृश्य परिग्रहाश्रयाश्रित—
सम्बन्धानन्तर्य-वियोगैककार्यविरोधातिशयप्राप्ति-व्यवधान-
सुखदुःखेच्छा-द्वेष-भयार्थित्व-क्रियाराग-धर्माधर्म-
निमित्तेभ्यः ॥ ४२ ॥

द्वन्द्वान्ते श्रूयमाणस्य निमित्तशब्दस्य प्रणिधानादिना प्रत्येकमन्वयः। प्रणिधानं मनसो विषयान्तरासञ्चारः। निबन्धनमेकत्र कथनम्। यथा प्रमाणेन प्रमेयस्मरणम्। अभ्यासः पुनःपुनर्ग्रहः। लिङ्गं व्याप्यम्। व्याप्येन धूमेन [धूमज्ञानेन] व्यापकस्याग्नेः स्मरणमानुभविकम्। लक्षणं असाधारणो धर्मः। यथा ज्ञातं कपिध्वजं अर्जुनस्य स्मारकम्। सादृश्यं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। यथा चन्द्रमसं दृष्टवतो प्रेयस्याः स्मरणम्। परिग्रहः—स्वीकारः। स्वीकृतवस्तुना दातुः स्मरणम्। आश्रयाश्रितौ राजादितत्परिजनौ। परस्परस्मारकौ। सम्बन्धः—गुरुशिष्यभावादिः। आनन्तर्यं—प्रोक्षणावघातादेः। वियोगः—दूरगमनम्। तच्च प्रेमास्पदानां स्मारकम्। एककार्याः—अन्तेवासिप्रभृतयः। विरोधः—सहाऽनवस्थानम्। अहिनकुलयोरन्यतरदर्शनेनान्यतरं स्मर्यमाणमनुभूयते।

अतिशयः—आधिक्यम् । उपनयनदिना संस्कृते वटौ आचार्यत्वस्मारकः । प्राप्तिः—प्रापणम् । धनाप्तिर्दातारं धनिकं स्मारयति । व्यवधानम्—आवरणम् । यथा खड्गादेः कोषादिः । सुखदुःखयोरन्यतरस्य ताभ्यां प्रयोजकस्य वा स्मरणम् । इच्छाद्वेषौ यद्विषयकौ तत्स्मारकौ । भयं—मृतेस्तद्धेतोर्वा स्मारकम् । अर्थित्वं दातुः । क्रिया व्यापारः । यथा शाखादेर्व्यापारः वायुस्मारकः । रागो रक्तिः । तया पुत्रादेः स्मरणम् । धर्माधर्माभ्यां जन्मान्तरानुभूतवस्तुविशेषस्मरणम् । त एते स्मृति हेतवः ॥ ४२ ॥

[चतुर्भिस्सूत्रैः बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ]

बुद्धेर्बुद्ध्यन्तराद्विनाशः प्रागुक्तः । स च स्वतृतीयक्षणवृत्तिध्वंसप्रतियोगित्व एव सम्भवति । तच्च न सम्भवति । एकस्या एव बुद्धेर्विषयान्तरसञ्चारविरहादिसत्त्वे बहुतरक्षणस्थायित्वात् इत्यत आह—

कर्मानवस्थायिग्रहणात् ॥ ४३ ॥

अनवस्थायिन्याः शरीरादिकर्मधाराया प्रत्यक्षधारापि वाच्या । न चाद्यबुद्धेरुत्तरग्राहकत्वं विरम्यव्यापाराऽभावात् । पूर्वपूर्वस्य परतःपरतोऽननुभवाद्विनाशसिद्धावाश्रयनाशादेरभावाद्विरोधिगुणस्यैव नाशकत्वमिति । ॥ ४३ ॥

शङ्कते—

अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् ॥ ४४ ॥

यद्याशुविनाशिनी बुद्धिस्यात्तर्हि योग्याशेषविशेषधर्मविशिष्टधर्मि-

ग्राहिणी न स्यात् विद्युत्सम्पातकालीनवस्तुग्रहणवत्। न चैवं तस्मान्न तथेत्यर्थः ॥ ४४ ॥

उत्तरयति—

हेतूपादानात्प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४५ ॥

विद्युत्सम्पातदृष्टान्तेन प्रतिषेद्धव्यस्य बुद्धेराशुविनाशित्वं अभ्युपगतम्। तथा चाशंतो बाधः ॥ ४५ ॥

समाधानान्तरमाह—

प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ॥ ४६ ॥

यथा प्रदीपार्चिषां सन्तन्यमानानामनवस्थायित्वेऽपि अभिव्यक्तग्रहणं तथाऽन्यत्रापि स्यात्। विद्युत्सम्पातस्थले या बुद्धिरुत्पन्ना सा स्वविषये व्यक्तैवेति भावः ॥ ४६ ॥

[बुद्धेः शरीरगुणव्यतीरेकप्रकरणम्]
[चेतना शरीरगुण इत्याशङ्का]

चेतना शरीरगुणः। सति शरीरे भावादसति शरीरेऽभावात्—

द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४७ ॥

पार्थिवे चन्दनादौ द्रव्ये स्वगुणस्य रूपादेः परगुणस्य सम्बन्धेन आप्यशीतस्पर्शादेः उपलब्धेः। एवं शरीरेऽपि रूपादेरौष्ण्यादेश्च ग्रहणाद्विप्रतिपत्तिः। बुध्यादिः शरीरगुणो न वेति ॥ ४७ ॥

[न शरीरगुणश्चेतना]

सिद्धान्तमाह—

यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ४८ ॥

न रूपादिहीनं शरीरं गृह्यते । चेतनाहीनं तु गृह्यते यथोष्णताहीना आपः । तस्मान्न शरीरगुणश्चेतनेति । तथा चानुमा—"बुध्यादिकं न शरीरगुणः अयावद्द्रव्यभावित्वात् शब्दवदिति ॥ ४८ ॥

[पिठरपाकवादिमतेन व्यभिचाराशङ्का]

पिठरपाकवदिमतेन शङ्कते—

न पाकजगुणान्तरोत्पत्तेः ॥ ४९ ॥

द्रव्यस्य नात्यन्तं रूपोपरमो भवति प्राक्तनरूपविनाशेऽपि रूपान्तरं पाकाज्जायत एव । तथा च व्यभिचार इति भावः ॥ ४९ ॥

[पूर्वोक्तव्यभिचारनिरसनम्]

सिद्धान्तमाह—

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५० ॥

यावत्सु द्रव्येषु पूर्वगुणप्रतिषेधस्तावत्सु प्रतिद्वन्द्विनो गुणान्तरस्य दर्शनं—यथा श्यामनिवृत्तौ रक्तादीनामिति । न पुनः शरीरे चेतनाविपरीतं गुणान्तरमुपलभ्यते चेतनामात्रोपरमस्त्वत्यन्तमिति ॥ ५० ॥

[शरीराव्यापकत्वेन ज्ञानादीनां शरीरगुणत्वाभावः]

इतश्च न शरीरगुणश्चेतना—

शरीराव्यापित्वात् ॥ ५१ ॥

शरीरविशेषगुणानामिति शेषः । ज्ञानसुखादिकं तु न शरीर-

विशेषगुणः । शरीराऽव्यापकत्वात् । शरीरव्यापकत्वं च सर्वावयवावच्छेदेन विद्यमानत्वम् । ज्ञानादीनां तु हृदयरूपपरिमितदेशवृत्तित्वान्न शरीरगुणत्वम् ॥ ५१ ॥

न केशनखादिष्वनुपलब्धेः ॥ ५२ ॥

न रूपादीनामपि शरीरव्यापकत्वं, 'केशनखादिष्वनुपलब्धेः' ॥ ५२ ॥

परिहरति—

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५३ ॥

इन्द्रियाश्रयत्वं शरीरस्य लक्षणम् । त्वक्पर्यन्तं हि जैवमनः सुखदुःखसंवित्त्यायतनं शरीरम् । तस्मान्न केशनखादिषु चेतनोत्पद्यते । [1]अर्थकारितस्तु शरीरोपनिबन्धः केशादीनामिति ॥ ५३ ॥

[बुद्धेः शरीरगुणत्वनिरासः]

इतश्च न शरीरगुणश्चेतना—

शरीरगुणवैधर्म्यात् ॥ ५४ ॥

द्विविधः शरीरगुणः । अप्रत्यक्षश्च गुरुत्वम् । बाह्येन्द्रियग्राह्यश्च रूपादिः । [2]विधान्तरं तु चेतना न करणाप्रत्यक्षा सुसंवेद्यत्वात् । नाऽतीन्द्रिया मनोविषयत्वात् । तस्माद्द्रव्यान्तरगुण इति ॥ ५४ ॥

---

[1] अर्थकारित इति—शरीरान्तर्वर्तिरक्तमज्जादिधातुव्यापारजनित इत्यर्थः ।

[2] द्विविधस्याऽपि वैलक्षण्यं चैतन्यस्य दर्शयति— विधान्तरमिति ।

चोदयति—

न रूपादीनामितरेतरवैधर्म्यात् ॥ ५५ ॥

इतरेतरविधर्माणो रूपादयः न शरीरगुणत्वं जहाति । एवं रूपादिवैधर्म्येऽपि चेतना शरीरगुणत्वं न हास्यतीति ॥ ५५ ॥

[बुद्धेः सप्रमाणं शरीरगुणत्वप्रतिषेधः]

परिहरति—

ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ ५६ ॥

अप्रत्यक्षत्वाच्चेति । यथेतरेतरविधर्माणो न द्वैविध्यमतिवर्तन्ते, तथा चेतनापि न द्वैविध्यमतिवर्तेत यदि शरीरगुणःस्यात् । अतिवर्तते तु तस्मान्न शरीरगुणश्चेतना इति । भूतेन्द्रियमनसो सिद्धे सत्यारम्भो दार्ढ्यार्थं इति । अत्र प्रयोगः—न शरीरगुणश्चेतना निमित्तान्तराऽभावे विरोधिगुण-दर्शने च सत्ययावद्द्रव्यभावित्वात् । अ[1]प्सु औष्ण्यवदिति । एवं परीक्षिता बुद्धिः ॥ ५६ ॥

[मनः परीक्षायां एकत्वसमर्थनम्]

अथ मनः परीक्ष्यते । तत्प्रतिशरीरमेकमनेकं वेति विचारे—

[2]ज्ञानायौगपद्यादेकं मनः ॥ ५७ ॥

अयुगपज्ज्ञानानि भवन्ति, एतत्प्रत्यक्षसिद्धम् । एतच्च मनस एकत्वं

---

[1] प्सुष्ण्य

[2] बुद्धिरिदानीं परीक्षिता । इतः परं मनः परीक्षा । तत्र किमेक-

साधयति । कथं? यदि बहूनि मनांसि स्युः । प्रतीन्द्रियं मनस्संबन्ध इति युगपदनेकार्थसन्निधाने युगपज्ज्ञानानि भवेयुः । न तु भवन्ति । तस्माद्विषयान्तरेषु प्रत्ययपर्यायादेकं मन इति ॥ ५७ ॥

[मनसोऽनेकत्वाऽऽशङ्का]

चोदयति—

न युगपदनेकक्रियोपलब्धेः ॥ ५८ ॥

अथ खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यतीत्याद्याः क्रियाः युगपद्भवन्तीति प्राप्तं मनसो बहुत्वमिति ॥ ५८ ॥

[पूर्वोक्तशङ्कानिरसनपूर्वकं मनसः एकत्वसमर्थनम् ]

परिहरति—

अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ॥ ५९ ॥

आशुसञ्चारादलातचक्रस्य भ्रमतो विद्यमानः क्रमो न गृह्यते इति युगपत्क्रिया भवन्तीत्यभिमानो भवति ॥ ५९ ॥

[अणु मनः इति समर्थनम् ]

यथोक्तहेतुत्वाच्चाणु ॥ ६० ॥

अणु मनः एकञ्चेति धर्मसमुच्चयः । य एवैकत्वे हेतुर्मनस उक्तः

---

मेव मनः चक्षुरादिसहकारितयाऽभ्युपगम्यते? मनः पञ्चकं वेति सन्देहे; मनः पञ्चकमेवोचितम् । तेन प्रत्येकसकलमनःसंबन्धासम्बन्धाभ्यां व्यासङ्गयौगपद्ये उपपद्येते इति पूर्वपक्षिते सिद्धान्तसूत्रमिदं—ज्ञानायौगपद्येति ।

ज्ञानाऽयौगपद्यम् ; तेनैवाऽणु मनोऽवसातव्यमिति ॥ ६० ॥

[शरीरस्यादृष्टजन्यत्वोपपादनम् ]

मनसः खलु भोः सेन्द्रियशरीरे वृत्तिरिति । शरीरे विचारिते मन एव विचारितं भवत्यतः पुनः शरीरं विचार्यते—किमयं पुरुषकर्मनिमित्तः शरीरसर्गः ? आहोस्विन् भूतमात्रनिमित्त इति विप्रतिपत्तेः संशयः । अत्रेदं तत्वं—

पूर्वकृतफलाऽनुबन्धात्तदुत्पत्तिः ॥ ६१ ॥

पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतम् । तस्य फलं—तज्जनितौ धर्माधर्मौ । तस्य फलस्याऽनुबन्धः—आत्मसमवेतस्य अवस्थानम् । तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य ; न स्वतन्त्रेभ्य इति ।

अयं न्यायोऽभिधीयते—तत्तत्पुरुषविशेषगुणप्रेरितभूतपूर्वकं शरीरं, कार्यत्वे सति पुरुषार्थक्रियासामर्थ्यात् । यत्पुरुषार्थसमर्थं तत्पुरुषगुण-विशेषप्रेरितभूतपूर्वकं दृष्टम् । यथा रथादीति ॥ ६१ ॥

[शरीरसृष्टौ अदृष्टानपेक्षत्वशङ्का]

अत्र नास्तिक आह—

भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् ॥ ६२ ॥

यथा कर्मनिरपेक्षेभ्यो निर्वृत्ताः सिकतादिमूर्तयः पुरुषार्थकारित्वादुपा-दीयन्ते तथा शरीरसर्गोऽपीति ॥ ६२ ॥

[पूर्वोक्ताशङ्कानिरासः]

न साध्यसमत्वात् ॥ ६३ ॥

यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या[1] तथा सिकतादीनामप्यकर्मनिमित्तः सर्गः साध्यः । तस्मादसाधनमिति सिकतादीनामपि पुरुषकर्मनिमित्त एव सर्गः पुरुषार्थक्रियासमर्थत्वात् भूतादिवत् इति ॥ ६३ ॥

[शरीरोत्पत्तौ मातापित्रोर्निमित्तत्वात् न मृदादिदृष्टान्तसाम्यमिति निरूपणम्]

विषमश्चायमुपन्यासः । भूतेभ्यो मूर्त्युपादानवदिति—

नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६४ ॥

न निर्बीजा इमा मूर्तयः बीजपूर्विका हि शरीरोत्पत्तिः । मातापितृशब्देन लोहितरेतसि बीजभूते गृह्येते । तत्र [2]सत्वस्य गर्भवासाऽनुभवनीयं कर्म पित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाश्रये शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्ति इति चोपपन्नं बीजाऽनुविधानमिति ॥ ६४ ॥

[शरीरोत्पत्तौ निमित्तान्तरकथनम्]

तथाऽहारस्य ॥ ६५ ॥

उत्पत्तिनिमित्तत्वादिति प्रकृतम् । भुक्तं पीतं चाहारः तस्य पाकाद्रसवद्द्रव्यं निवर्त्यते मातृशरीरे चोपचीयते । बीजे च गर्भाशयस्थे तत फल-

---

1 ध्या नास्ति तस्यत



2 सर्वस्य

लादिभावेनोपचीयमानं कर्मसापेक्षैर्भूतैः पाण्यादिभावमापद्यते[1]। यदि पुनः कर्मनिरपेक्षाणि भूतानि स्युः स्थाल्यादिगतमिवान्नं पच्येत; नत्विदमस्ति। तस्मात्कर्मसापेक्षाणि भूतानीति ॥ ६५ ॥

[शरीरसृष्टावदृसापेक्षतासमर्थनम्]

**प्राप्तौ चानियमात् ॥ ६६ ॥**

न च सर्वो दम्पत्योः सम्प्रयोगो गर्भाधानहेतुर्दृश्यते तदपि कर्मसापेक्षत्वे लिङ्गमिति ॥ ६६ ॥

अथ मन्यसे; शरीरं सर्वात्मभिः सम्बध्यते। तत्र शरीरादिगतो न कश्चिन्नियमहेतुरस्ति। येन शरीरमेव तस्यात्मनो व्यवतिष्ठेत। न च पुरुषगतः कश्चिद्तिशयो दृश्यते येन शरीरमेकस्यैवोपभोगसाधनं भवेत्। अस्ति च नियमः। तस्माद्वक्तव्यो नियमहेतुः। अतः आह—

**शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म ॥ ६७ ॥**

येनैव कर्मणा शरीरमुत्पद्यते तदेव शरीरं नियमयतीति। अकर्मनिमित्ते तु शरीरसर्गे यथोक्तदोष इति ॥ ६७ ॥

---

[1] अयमत्र विवेकः—"ऋतुकाले सम्प्रयोगात् एकरात्रोषितं कललं भवति। सप्तरात्रोषितं बुद्बुदं भवति" इति गर्भोपनिषत्।

"प्रथमे मासि संक्लेदभूतो धातुर्विमूर्च्छितः।
मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः॥"

इति याज्ञवल्क्यसंहिता।

एतेनाऽनियमः प्रत्युक्तः ॥ ६८ ॥

योऽयमकर्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यते अयं शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्मेत्यनेन प्रत्युक्तः । कः पुनरयं नियमः? यथैकस्यात्मनः शरीरं तथा सर्वात्मनामिति ।

उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः । शरीरस्य द्वे प्रकृती । व्यक्ताऽव्यक्ता चेति । तत्राव्यक्ताया कर्मसमाख्याताया प्रकृतेरुपभोगात् प्रक्षयः । प्रक्षीणे च कर्मणि विद्यमानानि भूतानि न शरीरमुत्पादयन्तीति उपपन्नोऽपवर्गः । कर्मनिरपेक्षेषु शरीरकारणेषु कस्य प्रक्षयान्मोक्षमाणा पुरुषाऽपवृज्येरन् भूतलक्षणाया प्रकृतेरनुच्छेदादिति ॥ ६८ ॥

[शरीरसृष्टौ साङ्ख्यनयनिरासः]

[1]पुनस्तत्प्रसङ्गोऽपवर्गे ॥ ६९ ॥

तददृष्टकारितमिति चेत्—अथ मन्यसे अदृष्टकारिता शरीरोत्पत्तिः । अदृष्टशब्देनाऽदृश्यमाना प्रकृतिरुच्यते । सा सर्गादौ पुरुषार्थेन हेतुना प्रवर्तते । प्रवृत्ता महदादिभावेन शरीरमुत्पादयति । उत्पन्ने तु शरीरे अदृष्टा दृश्यं पश्यति । दृश्यं च द्विविधं—विषया प्रकृतिपुरुषयोर्नानात्वं च । दृष्टे पुनस्तस्मिन्नानात्वे प्रधानं चरितार्थत्वान्न प्रवर्तते इति मन्यते । तत्र

---

[1] 'तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे' इति प्रचलितः मुद्रितः सूत्र पाठः । "शङ्कते—तददृष्टकारितमिति चेत् इति" इति तात्पर्यटीका । एतदनुरोधेन यथा मूलकोशं च "पुनस्तत्प्रसङ्गोऽपवर्गे" इत्येव मूल पाठ आदृतः ।

पुनस्तत्प्रसङ्गोऽपवर्गे । अस्यार्थः—अदर्शननिमित्ता चेच्छरीरोत्पत्तिः यथा प्राक् नानात्वदर्शनात्प्रधानं पुरुषार्थं प्रवर्तते तथाऽपवर्गेऽपि प्रवर्तेत । न चैवमभ्युपगम्यते । तस्मान्नादर्शनं सर्गकारणं चरितार्थताविशेषो भविष्यतीति च न युक्तं चरितार्थानामपि पुनःपुनरारम्भदर्शनात् । आद्येन शरीरेण[1] रूपाद्युपलब्धेः । कृतत्वेऽपि चरितार्थं पुन[2]र्द्वितीयादिशरीरं ह्यारभ्यते । तेन गम्यते चरितार्थानामपि पुनर्भूतानां शरीरारम्भ इति ।

अपरे त्वदृष्टं परमाणुगुणं वर्णयन्ति तेषामपि पुनःपुनस्तत्प्रसङ्गोऽपवर्गे इत्युक्तदोषः समानः । परमाणुगुणस्याऽदृष्टस्य सद्भावादिति ॥ ६९ ॥

[आर्हतनयनिराकरणम् ]

अथ परमाणुगुणाऽदृष्टवादिनां मतमुपन्यस्यति—

**मनः कर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः ॥ ७० ॥**

परमाणवः स्वगुणाददृष्टात्संहन्यन्ते । संहताश्च द्व्यणुकादिक्रमेण शरीरमुत्पादयन्ति । तस्मिन्शरीरे मनोऽपि स्वगुणाददृष्टादुपसर्पति । उपसर्पणहेतोरदृष्टस्य नित्यत्वात्किं कृतमपसर्पणमिति ? कर्माशयक्षये कर्माशयादपसर्पणमिति युक्तं प्रायणम् । उभयवृत्तिर्मनोवृत्तिरदृष्टो भविष्यतीति न युक्तमेकस्य जीवनप्रायणहेतुत्वाऽनुपपत्तेः ॥ ७० ॥

[संयोगानुच्छेदे दोषाभिधानम् ]

संयोगाऽनुच्छेदे दोषमाह—

---

[1] ण शब्दाद्यु

[2] न विंशया

नित्यत्वप्रसङ्गश्च प्रायणाऽनुपपत्तेः ॥ ७१ ॥

तथा च प्रायणस्य मृतेरनुपपत्तेः शरीरादेर्नित्यत्वस्याविनाशित्वस्य च प्रसङ्गः ॥ ७१ ॥

[पूर्वोक्ताशङ्कानिरासयत्नः]

अस्य दोषस्य परिहारमाह पूर्वपक्षिमतेन—

अणुश्यामता नित्यत्ववदेतत् स्यात् ॥ ७२ ॥

यथा नित्यस्याऽणोः श्यामत्वं नित्यमप्यग्निसंयोगेन प्रतिषिध्यते । एवमणुमनसोरदृष्टं नित्यमपि सम्यग्ज्ञानेन प्रतिषिध्यत इति ॥ ७२ ॥

[परोक्तसमाधानापाकरणम्]

एतच्च न—

नाऽकृताऽभ्यागमप्रसङ्गात् ॥ ७३ ॥

आत्मभिरकृतस्य कर्मणः फलोपभोगप्रसङ्गात् । वाचाऽनुपपन्नप्रमाणकस्यार्थस्याभ्युपगमप्रसङ्गादिति सूत्रार्थः ॥ ७३ ॥

आत्मा शरीरं करणमर्थो बुद्धिर्मनस्तथा ।
तद्यथावस्तु तत्त्वेन तत्त्वथेहोपपादितम् ॥

इति न्यायसूत्रविवरणे तृतीयाध्यायस्य द्वितीयमाह्निकम् संपूर्णम् ।

समाप्तश्चायं तृतीयोऽध्यायः ।

## अथ न्यायसूत्रविवरणे चतुर्थाऽध्याये प्रथममाह्निकम्

[प्रवृत्तिपरीक्षा प्रकरणम्]

[1]मनसोऽन[2]न्तरा प्रवृत्तिः परीक्षितव्या। तत्र यावद्धर्माधर्माश्रयं शरीरं परीक्षितं सा सर्वा प्रवृत्ते. परीक्षेत्याह—

**प्रवृत्तिर्यथोक्ता ॥ १ ॥**

तथा परीक्षितेति ॥ १ ॥

[दोषपरीक्षणम्]

प्रवृत्त्यनन्तरास्तर्हि दोषाः परीक्ष्यन्तां ; इत्यताह—

**तथा दोषाः ॥ २ ॥**

उक्ता इति बुद्धिसमानाश्रयत्वादात्मगुणाः संसारस्यानादित्वादनादिना प्रबन्धेन प्रवर्तन्ते। सम्यक्ज्ञानाच्च मिथ्याज्ञाननिवृत्तौ निवर्तन्त इति ॥ २ ॥

[दोषत्रैराश्यप्रकरणम्]

प्रवर्तनालक्षणा दोषा मानेर्ष्याऽसूयाविचिकित्सामत्सरादयः। ते कस्मान्नोपसङ्ख्यायन्ते? अत्राह—

---

[1] तुरीयेऽस्मिन्नध्याये आत्मशरीरेन्द्रियार्थबुद्धिमनोरूपप्रमेयषट्कं क्रमप्राप्तं परीक्ष्यते। स एव चाध्यायार्थः। अत्राध्यायक्रमं निरूपयति मनसोऽनन्तरा इति।

[2] न्तरं

तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥

तेषां दोषाणां त्रयो राशयः त्रयः पक्षाः । तत्र रागपक्षः कामो मत्सरः स्पृहा तृष्णा लोभ इति । द्वेषपक्षः क्रोधः ईर्ष्याऽसूया द्रोहोऽमर्ष इति । मोहपक्षः मिथ्याज्ञानं विचिकित्सा मानो मदः प्रमाद इति । अत्र राग इति सामान्यं, तद्विशेषाः कामादयः । ते सामान्येन सङ्गृहीताः । तथा द्वेषसामान्येन क्रोधादयो विशेषाः । एवं मोह इति सामान्येन मिथ्याज्ञानादयः । ननु एकं रागद्वेषमोहाः लक्षणाऽभेदात्, रागभेदवदिति । न रागद्वेषमोहार्थान्तरभावात् । सत्यपि [1]लक्षणस्याभेदे [2]आन्तर्गणिकं भेदकं लक्षणमस्ति । तदुपपत्तेस्त्रित्वम् । किं पुनः आन्तर्गणिकं लक्षणम् । सक्तिलक्षणो रागः । अमर्षलक्षणो द्वेषः । मिथ्याप्रतिपत्तिलक्षणो मोहः । एतच्च रागद्वेषमोहानां व्यवच्छेदकं लक्षणं आत्मप्रत्यक्षमिति ॥ ३ ॥

[नार्थान्तरं रागादय इति निरूपणम् ]

अत्र चोदयति—

नैकप्रत्यनीकभावात् ॥ ४ ॥

नार्थान्तरं रागादयः । एकप्रत्यनीकभावात् । तत्त्वज्ञानं

---

[1] लक्षणाऽभेद इति । प्रवर्तनालक्षणा दोषा इति एकलक्षणाक्रान्तत्वेऽपीत्यर्थः ।

[2] आन्तर्गणिकं परस्परम् ।

सम्यङ्नतिरार्यप्रज्ञा [1]सम्बोध इति प्रत्यनीकं त्रयाणाम्। अतस्तदेकं विभागवत्। यथा विभाग एकेन संयोगेन विरुद्धयनान एको भवति [2]तथेति ॥ ४ ॥

[पूर्वोक्तेऽर्थे व्यभिचारोद्भावनम्]

दूषयति—

व्यभिचारादहेतुः ॥ ५ ॥

एकप्रत्यनीकाः पृथिव्यां रूपादयः। एकाग्निसंयोगविरोधिनः। न चैषामेकत्वमित्यनेकान्तः एकयोनित्वादेकं रागादयः शब्दवदित्यप्यनेनैव प्रत्युक्तम्। एकयोनयो रूपादयः न चैषामेकत्वमिति सति चार्थान्तरत्वे ॥ ५ ॥

[मोहस्य पापतरत्वनिरूपणम्]

तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः ॥ ६ ॥

तेषां मोहः पापः पापतरो वा द्वावभिप्रेत्योक्तम्। कस्मात्? नामूढस्येतरोत्पत्तेः। तत्वज्ञानात्तु मोहे निवृत्ते न रागद्वेषौ भवतः। इत्येक प्रत्यनीकता न पुनरेकत्वादिति। एवञ्च कृत्वा दुःखादीनामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति सिद्ध्यति ॥ ६ ॥

[मोहस्य न दोषत्वमित्याक्षेप]

---

[1] सम्यक् बोधः सम्बोध इत्यर्थः।

[2] तथेति। यथा विभाग एकः तथा तत्वज्ञानैकनाश्यत्वाद्रागादयोऽप्येकं इत्यर्थः।

प्राप्तस्तर्हि—

निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥

अन्यद्धि निमित्तं अन्यन्नैमित्तिकमिति दोषस्य निमित्तत्वाददोषो मोह इति ॥ ७ ॥

[मोहस्य न दोषलक्षणाऽनाक्रान्तत्वम् ]

परिहरति—

न दोषलक्षणाऽवरोधान्मोहस्य ॥ ८ ॥

प्रवर्तनालक्षणा दोषा [१-१-१८] इति दोषलक्षणेनावरुध्यते मोहः । अतो दोषेषु मोह इति ॥ ८ ॥

निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥

तुल्यजातीयानामनेकविधो विकल्पः; निमित्तिकभावश्च । यथा बुद्धिर्बुद्ध्यन्तरस्य निमित्तं बुद्धिजातीया चेति । तुर्यादयश्च द्रव्यस्य निमित्तं द्रव्यजातीया नोदनाभिघातसंयुक्तसंयोगाः संस्कारश्च गुणा इति परीक्षिताः ॥ ९ ॥

[ प्रेत्यभावपरीक्षाप्रकरणम् ]

परीक्षिता दोषाः । दोषानन्तरं प्रेत्यभावः । तस्यासिद्धिः । आत्मनो नित्यत्वादिति । अयं च सिद्धार्थानुवादः । अथ सिद्धान्त-सूत्रं—

आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥

नित्यः सन्नात्मा प्रैति । पूर्वशरीरं जहाति म्रीयत इति । पूर्वशरीरं च हित्वा भवति जायते शरीरान्तरमुपादच इति । तच्चैतत्पुनरुत्पत्तिः प्रेत्यभाव इत्युक्तम् । न पुनरात्मनो जन्ममरणे नित्यत्वात् । यस्य पुनरात्मन उत्पातनिरोधौ तस्य कृतनाशाकृतागमदोषाः स्युः इति चोदयति ॥ १० ॥

"कथमुत्पत्तिरिति चेत्"? किं धर्मकात् कारणादिदं शरीरेन्द्रियमहाभूतादि व्यक्तमुत्पद्यत इति ।

[उत्पत्तिप्रकारप्रदर्शनम्]

व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥

व्यक्ताव्यक्तानां प्रत्यक्षप्रामाण्यात् । किं पुनर्व्यक्तमुपलब्धिलक्षणप्राप्तं रूपादिमद्द्रव्यं तत्सामान्यात् परमाणुलक्षणमपि पृथिव्यादिकारणं व्यक्तम् । तस्माद्रूपादियुक्तेभ्यः परमाणुभ्योघऽटगवादीनां व्यक्तानामुत्पत्तिः । अत्र न्यायः प्रत्यक्षप्रामाण्यादिति दृष्टा हि रूपादिमद्भ्यो रूपादिमतामुत्पत्तिरिति ॥ ११ ॥

[सिद्धान्ताशयमबोद्धुः परस्याशङ्का]

चोदयति—

न घटाद्घटाऽनिष्पत्तेः ॥ १२ ॥

सजातीयात्सजातीयमुत्पद्यत इति मत्वाऽयं प्रतिषेधः क्रियते ॥ १२ ॥

[व्यक्ताद्व्यक्तोपपत्तिरिति निरूपणम्]

परिहरति—

व्यक्ताद्धटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

न ब्रूमः सर्वं सर्वस्य कारणमिति किं तर्हि विषयादुत्पद्यते; व्यक्तं रूपादिमद्द्रव्यं तत्तथाभूतादेवोत्पद्यत इति। तच्च घटेऽप्यस्ति रूपादिमत एव व्यक्तात् कपालादुत्पद्यमानत्वादिति। तदेतत्तत्त्वम् ॥ १३ ॥

[ शून्यतोपादानप्रकरणम् ]

अतः परं प्रावादुकानां दर्शनान्युपन्यस्य कानिचित्प्रतिषिध्यन्ते कानिचिदभ्यनुज्ञायन्ते। तत्र तावत्—

अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥

[1]अभावाद्भावो जायत इति कस्यचिद्दर्शनम्। तत्र न्यायः— नाऽनुपमृद्य प्रादुर्भावादिति। न किलाऽविनष्टे बीजादौ कारणे कार्यं प्रादुर्भवति तस्माद्बीजविनाशोऽङ्कुरकारणमिति ॥ १४ ॥

[शून्यतोपादाननिराकरणम् ]

†व्याघातादप्रयोगः ॥ १५ ॥

उपमृद्य प्रादुर्भवतीति प्रयोगो नोपपद्यते; व्याघातात्। उपमर्दकस्य पूर्वमसत्त्वे उपमर्दकत्वाऽयोगात् पूर्वं सत्त्वे च परतः प्रादुर्भावाऽयोगात् ॥ १५ ॥

---

[1] असदेवेदमग्र आसीदित्यादि श्रुत्यनुरोधेन असत एव सतो जनिः। न सतः सतो। तस्मादसदुपादानकं विश्वमिति शून्यवादिनः।

† लेखकप्रमादात्सूत्रद्वयव्याख्यात्र नोपलभ्यत इति यथाभाष्यं तदापूरि।

[अविद्यमानेऽपि कारकशब्दप्रयोग इत्याशङ्का]

पुनराशङ्कते—

नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥

अतीते चानागते चाविद्यमाने कारकशब्दाः प्रयुज्यन्ते । पुत्रो जनिष्यते ; जनिष्यमाणं पुत्रमभिनन्दन्ति अभूत्कुम्भो भिन्नं, कुम्भमनुशोचति अजाताः पुत्राः पितरं तापयन्ति इति भाक्ताः प्रयोगाः दृश्यन्ते । का पुनरियं भक्तिः ? आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भावार्थः । प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीति भाक्तं कर्तृत्वमिति ॥ १६ ॥

[पूर्वोक्तशङ्कानिरसनपूर्वकं नाभावाद्भावोत्पत्तिरिति निरूपणम् ]

न विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥

न बीजविनाशोऽङ्कुरकारणं ; अपि तु बीजावयवा पूर्वव्यूहपरित्यागेनेति सूत्रार्थः । अतो न विनष्टात् बीजात् अङ्कुर उत्पद्यत इति ॥ १७ ॥

[अङ्कुरस्य बीजोपादनतोपसंहारः]

क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥

उपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः । स खलु हेतुरभावाद्भावोत्पत्तेः इति निर्देशः । स च न प्रतिषिध्यते इति तस्मान्नाभावात् भावोत्पत्तिः । न चान्यद्बीजावयवेभ्योऽङ्कुरस्य कारणमस्तीत्युपपाद्यते बीजोपादाननियम इति ॥ १८ ॥

[ईश्वरोपादानताप्रकरणम् ]

[1]अपर इदानीमाह—

ईश्वरः कारणं पुरुषकर्माऽफल्यदर्शनात् ॥ १९ ॥

पुरुषोऽयमवश्यं समीहमानो नाप्नोति समीहाफलं तेन गम्यते पराधीनं पुरुषस्य कर्मफलाराधनमिति । तस्मात्स ईश्वरः कारणमिति ॥ १९ ॥

---

[1] अत्र ब्रह्मपरिणामवादो वा विवर्तवादो वा दर्शित इति वदन्ति । तथा हि—मास्त्वयं प्रपञ्चो शून्यतोपादानकः ; तथाप्यस्तु ब्रह्मोपादानकः । उपादानं च द्विविधं—परिणाम्युपादानं विवर्तोपादानं चेति । तत्राऽधिष्ठानसमसत्ताककार्यापत्तिः परिणाम्युपादनम् । मृत्तिकायाः घटशरावाद्याकारेण विपरिणाम इव ब्रह्मणोऽपि विश्वाकारेण परिणामः भवति । अधिष्ठानविषमसत्ताककार्यापत्तिर्विवर्तोपादानम् । द्वितीये ब्रह्मैवाविद्यावशान्नामरूपप्रपञ्चभेदेन विवर्तते मुखमिवैकमनेकमणिकृपाणादर्शभेदान्नैकविधप्रतिबिम्बभेदेन । एवञ्च चेतनाशक्तिक्रियाशक्त्याश्रयः ईश्वरः जगतः कारणम् । न परमाणवो प्रधानं अभावो वा जगत्कारणं ; बहुस्यामित्यादि श्रुत्यानुगुण्येन तेषां ज्ञानाद्यनाश्रयत्वादात्मनस्तदाश्रयत्वाच्च ।

मास्तु प्रधानादि जगत्कारणं परमेश्वरो वा । जीव एवास्तु तादृश इति चेत् ; नैवम् । अस्वतन्त्राच्चेतनस्य । स यदिच्छति न तदाप्नोति । यदाप्नोति तन्नेच्छति । चेतनस्य प्रतिक्षणं सहकार्यन्तरसमवधानं अवश्यमनुभूयते । यश्च सहकारी परमेश्वरः स एवास्तु जगतः कारणमिति ।

[पुरुषकर्मणोऽपि फलहेतुताशङ्का]

न [1]पुरुषकर्माऽभावे फलाऽनिष्पत्तेः ॥ २० ॥

ईश्वरश्चेत् कारणं अन्तरेणाऽपि पुरुषकर्म सुखदुःखोपभोगः स्यात् । ततश्च कर्मविलोपोऽनिर्मोक्षप्रसङ्गश्च । ईश्वरस्यैकरूपत्वादेकरूपा क्रियेति ॥ २० ॥

[कर्मसहकारेण ईश्वरस्य फलानुग्राहकत्वोपपादनम् ]

अथेश्वरवादिनां मतेनास्य परिहारमाह—

तत्कारितत्वादहेतुः ॥ २१ ॥

न ब्रूमः कर्माऽनपेक्ष ईश्वरः कारणमिति ; अपि तु पुरुषकर्मेश्वरोऽनुगृह्णाति । कोऽनुग्रहार्थः ? यद्यथाभूतं यस्य च यदा परिपाककालः तत्तथा

---

[1] यदुक्तं ब्रह्मैव नामरूपप्रपञ्चभेदेन विपरिणमत इति तन्नेत्यर्थः । तथाहि ब्रह्म किं सर्वात्मना विपरिणमते एकदेशेन वा ? नाद्यः । अनित्यपदार्थतादात्म्यापन्नस्य तस्यापि अनित्यतापत्तेः । न द्वितीयः निरंशस्य ब्रह्मणो एकदेशेन परिणामाभ्युपगमे सावयवत्वेनाऽनित्यत्वाऽनिरासः । नापि विवर्तपक्षोऽपि श्रेयान् । अधिष्ठानस्य निरंशत्वात् । भ्रमे हि अधिष्ठानस्य कार्त्स्न्येन ज्ञानाभावः ; सामान्यतश्च ज्ञानमावश्यकम् । यथाह—“ अधिष्ठानस्य कार्त्स्न्येन ज्ञानेऽज्ञाने च न भ्रम ” इति । प्रकृते चाधिष्ठानस्य निरंशत्वादारोपाधिष्ठानत्वं नोपपद्यत इति विवर्तवादाऽनुपपत्तिः ।

तदा च विनियुक्तं इति[1]। एवञ्च केवलं पुरुषकर्म फलस्याहेतुः। पुरुषकर्मकारितत्वाच्च केवलमीश्वरोऽपि फलस्याहेतुः; अतो न यथोक्त दोषप्रसङ्गः।

तत्कारितत्वादिति सर्वस्येश्वरः निमित्तकारणमित्युक्तं भवति। अथ मन्यसे; सिद्धे ईश्वरस्यास्तित्वे निमित्तकारणभावः सिद्ध्येत्। तत्त्व-सिद्धम्। तस्मादयुक्तमिदमिति।

न्यायत एव तदुपपत्तेः। येनैव न्यायेनेश्वरस्य कारणत्वं सिद्ध्यति तेनैवास्तित्वमिति। न ह्यविद्यमानं कारणमिति। कः पुनरीश्वरस्य कारणत्वे न्यायः? सोऽभिधीयते प्रधानपरमाणुकर्माणि प्राक्प्रवृत्तेर्बुद्धिम-त्कारणाधिष्ठितानि प्रवर्तन्ते अचेतनत्वात् वास्यादिवदिति। किमर्थमयं करोतीति चेत् स्वाभाव्यादिति ब्रूमः। यथा पृथिव्यादीनि भूतानि धारणादिक्रियां स्वाभाव्यात्कुर्वन्ति तथैवेश्वरोऽपि तत्स्वाभाव्यात्प्रवर्तते। प्रवृत्तिस्वभावकं हि तत्त्वमिति।

बुद्धिमत्वादेव चायमीश्वरः आत्मान्तरम्। तथाहि—अधर्माऽज्ञान-प्रमादहान्या धर्मज्ञानसमाधिसम्पदा विशिष्टमात्मान्तरमीश्वरः। तदीय-बुद्धेश्च नित्यत्वमभ्युपगच्छामः। कथं? उच्यते—नित्यज्ञानाश्रय ईश्वरः युगपदनेककार्योत्पादकत्वेन प्रत्यर्थं नियतज्ञानत्वात्। ये त्वनित्यज्ञानाश्रयाः न ते प्रत्यर्थं नियतज्ञानाः; यथाऽस्मदादय इति।

---

[1] तथा च यः कर्माऽनपेक्षकर्तृत्वमीश्वरस्य मनुते स एवानिर्मोक्षत्वा-दिदोषैस्संलग्नः; न कर्मापेक्षया फलदातृत्वं वदन्तः इति भावः।

आगमश्चेश्वरकारणतावादे श्रूयते—

"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वभ्रं वा स्वर्गमेव वा ॥
यदा स देवो जागर्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥" इति ॥ २१ ॥

[आकस्मिकत्वप्रकरणम्]

इदानी अपर[1] आह—

अनिमित्तो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥ २२ ॥

यथा कण्टकतैक्ष्ण्यादि निर्निमित्तं चोपादानवच्च तथा शरीरसर्गोऽपीति तदिदं दृष्टान्तसूत्रम् । कः पुनरत्र न्यायः? उच्यते—अनिमित्तरचनादि विशेषाः शरीरादयः संस्थानविशेषवत्त्वात् कण्टकतैक्ष्ण्यादिवदिति । नानुपलभ्यनिमित्तानां अनुमानतो निमित्तोपलब्धिः । कथं? कण्टकशरीरानि निमित्तवन्ति भवन्ति संस्थानविशेषवत्त्वात् घटादिवत् ।

उक्तं चात्र; किमुक्तं पूर्वकृतफलानुबन्धात्तदुत्पत्तिरिति । न चोभयपक्षसम्प्रतिपन्नं संस्थानविशेषवदनिमित्तं दृष्टमिति ॥ २२ ॥

[भ्रान्तस्य एकदेशिनो पूर्वपक्षदूषणम्]

अपरे तु कस्यचिन्निमित्तत्वं एवं वर्णयन्तीत्याह—

---

[1] अपरः—आकस्मिकत्ववादी चार्वाकः ।

[1]अनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥

अनिमित्तमेव निमित्तम्। यत उत्पत्तिस्तन्निमित्तमिति अनिमित्त-निमित्तत्वात् नानिमित्तत उत्पत्तिरिति एतच्च न, निमित्तानिमित्तयोरर्थान्तर-भावादप्रतिषेधः ॥ २३ ॥

[पूर्वोक्तदूषणपरिहारः]

[2]निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥

अन्यन्निमित्तमन्यच्च निमित्तप्रत्याख्यानम्। न प्रत्याख्यानमेव प्रत्याख्येयं भवति, अभ्यनुज्ञाप्रतिषेधयोरेकत्वायोगात् ॥ २४ ॥

[सर्वानित्यत्वनिराकरणप्रकरणम्]

[3]अन्ये मन्यन्ते—

सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥

किमनित्यं नाम? यस्य [4]कदाचिद्भावः तदनित्यम्। अतश्च कादाचित्कं सर्वमनित्य उत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥

---

[1] भ्रान्तः एकदेशी शङ्कते—अनिमित्तत इति। अनिमित्ततो भावोत्पत्तिरित्यभ्युपगच्छन् अनिमित्तमेव निमित्तमङ्गीकृतवान्। तथा चाऽऽ-निमित्ता भावोत्पत्तिरिति रिक्तं वचः।

[2] एकदेशिदूषणं परिहरति—निमित्तानिमित्तयोरीति।

[3] सर्वानित्यत्ववादमाशङ्कते—अन्ये त्विति।

[4] कदाचिद्भाव इति। यत्कदाचिद्भावि तदनित्यम्। यच्चो-त्पत्तिस्वभावकं वस्तु; तदुत्पत्तेः पूर्वं नास्ति। एवं च यदुत्पत्तिविनाश-

[अनित्यताया नित्यत्वात् सर्वमनित्यमित्यसाध्वित्येकदेशिनः शङ्का]

एतत् प्रतिक्षिपति—

नानित्यता नित्यत्वात् ॥ २६ ॥

सर्वमनित्यमिति ब्रुवाणः प्रष्टव्यः । किं सर्वस्याऽनित्यता नित्या आहोस्विदनित्येति? यद्यनित्या अनित्यताया अभावात्सर्वमनित्यमिति व्याहतो हेतुः ॥ २६ ॥

]एकदेशिमतदूषणम् ]

अथ स्वरूपवाद्याह—

तदनित्यत्वं अग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥

यथाग्निर्दाह्यं विनाश्यानुविनश्यति ; एवमनित्यतापि सर्वं विनाश्याऽनुविनश्यतीति ॥ २७ ॥

[प्रमाणभावे नित्यत्वाभ्यनुज्ञा]

उत्तरवाद्याह—

नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥ १८ ॥

यत्र उत्पत्तिविनाशधर्मकत्वादित्ययं हेतुरुपलभ्यते तत्र तत्र हेतु-

---

स्वभावकं तदेव कदाचिदस्तीत्यायातम् । एवं च पूर्वापरकालयोरभावात् मध्ये च भावात्सिद्धं कदाचिद्भावलक्षणमनित्यत्वमुत्पत्तिविनाशधर्मकत्वात् ।

सामर्थ्यादनित्यत्वं प्रतिपद्यामहे। यत्र हेतुर्नास्ति तेषामनित्यत्वं [1]कथं प्रतिपत्तव्यमिति? ॥ २८ ॥

[सर्वनित्यत्वनिराकरणप्रकरणम्]

सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ ॥

भूतमात्रमिदं सर्वम्। तानि च नित्यानीति भूतोच्छेदाऽनुपपत्तेः सर्वं नित्यमिति ॥ २९ ॥

नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥

उत्पत्तिकारणं विनाशकारणं चोपलभ्यते भावानाम्। तदुभयं नित्यत्वे न स्यादिति ॥ ३० ॥

[भूतलक्षणाक्रान्तत्वात्सर्वनित्यत्वशङ्का]

पूर्ववाद्याह—

तल्लक्षणाऽवरोधादप्रतिषेधः ॥ ३१ ॥

यदिदमुत्पद्यते विनश्यतीति च मन्यसे, न तद्भूतलक्षणहीनं गृह्यते तस्माद्भूतलक्षणावरोधात् सर्वं नित्यमिति।

सर्वमनित्यमिति ब्रुवाणो न कश्चिज्जायते विनश्यतीति प्रतिपद्यते। तत्प्रतिपत्तौ च हिताहित प्राप्तिपरिहारोऽस्य परिस्पन्दो व्यर्थ आपद्येत।

---

[1] कथं प्रतिपत्तव्यमिति। न कथमपीत्यर्थः। तथा च परमसूक्ष्माणां वस्तूनां, आत्मदिगादीनां तद्गुणादीनां च नोत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते। तस्मान्नानित्या इति।

सर्वस्य च पक्षीकरणादृदृष्टान्ताभावः। वाक्योपादानं च व्याहतम् ॥ ३१ ॥

[उत्पत्तिकारणविनाशकारणभावान्न सर्वं नित्यम्]

उत्तरवाद्याह—

नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥

भूतलक्षणावरोधस्यान्यथोपपत्तिरनेन प्रोच्यते। कारणसमानगुणस्योत्पत्तिस्तत्कारणं च दृश्यते; न चैतदुभयं नित्यविषयम्। न चोत्पत्तितत्कारणोपलब्धिः शक्या प्रत्याख्यातुम्। न चाविषया काचिदुपलब्धिः उपलब्धिसामर्थ्यात्कारणेन समानगुणं कार्यमुत्पद्यत इत्यनुमीयते। स खलूपलब्धेर्विषय इति। एवं च तल्लक्षणावरोधोपपत्तिरिति ॥ ३२ ॥

[स्वायम्भुवमतदूषणम्]

अपास्य मतं साङ्ख्यानां, स्वायम्भुवसिद्धान्तो दूष्यते। तेषां चायमाशयः—त्रिविधः खल्वयं धर्मिणः परिणामो धर्म लक्षणावस्थारूपः। तद्यथा सुवर्णं धर्मि। तत्र वर्धमानरुचकादिर्धर्मपरिणामः। लक्षणपरिणामोनगवादिः यदा खलु सुवर्णकारो वर्धमानकं भङ्क्त्वा रुचकमानयति। तदा वर्धमानको वर्तमानलक्षणं हित्वाऽतीतलक्षणमापद्यते। रुचकस्त्वनागततालक्षणं हित्वा वर्तमानतामापद्यते। वर्तमानतामापन्न एव च रुचको नवपुराणभावमापद्यमानोऽवस्था परिणामवान् भवति। नवपुराणावस्थाश्च वर्तमानलक्षणाश्रया लक्षणपरिणामः। सोयं त्रिविधः परिणामो धर्मिणः। धर्मलक्षणावस्थाश्च धर्मिणो भिन्नाश्चाभिन्नाश्च। धर्मिणाऽभिन्नाः सन्तोपि धर्मा नित्याः। तस्माद्भिन्नाश्चोत्पत्तिविनाशविषया अनित्याः। तथा

च नानाविधेषु परिणामेष्वेक एवानुवर्तते । एवञ्चावर्तमानो नित्य एवेति ! अवस्थितस्य नित्यस्योपादानस्य समवायिकारणस्य धर्ममात्रमुत्पद्यते नश्यति च । एवं च धर्ममात्रमुत्पत्तिविषयो न वस्तुभूतो धर्मी गोघटादिः । अभ्युपेत्येदमुदितम् । वस्तुवस्तु धर्माणामपि नोत्पत्तिविनाशौ–प्रागुत्पत्ते- रर्वाक् च विनाशाद् धर्मिरूपेण तेषां वर्तमानत्वादिति सर्वनित्यत्वं तदवस्थमे- वेत्याक्षेपाशयः—

न व्यवस्थाऽनुपपत्तेः ॥ ३३ ॥

अयमुपजनः इयं निवृत्तिरिति व्यवस्था नोपपद्यते । उपजात- निवृत्तयोर्विद्यमानत्वात् । उपजनापाययोः स्वरूपतः कालतो वा विशेष- तश्च सम्बन्धितोऽनागतत्वादितश्च व्यवस्थानुपपत्तिरित्यर्थः । एतदुक्तं भवति—न तावद्भेदाभेदौ परस्परपरिहारव्यवस्थितधर्मावेकत्र समवेतौ । तस्मादुपजनापायव्यवस्थायै धर्मलक्षणावस्थानां धर्मिणो भेदमिच्छता तेषाम- नित्यत्वमप्यभ्युपेतव्यमिति ॥ ३३ ॥

[सर्वपृथक्त्वनिराकरणप्रकरणम् ]

[ सर्वपृथक्त्ववादनिरूपणम् ]

सर्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥

भावस्य लक्षणं शब्दः लक्ष्यतेऽनेन भावः सर्वो भावसमाख्या- शब्दोऽनेकस्मिन्नवयवसमूहे रूपादिसमूहे वर्तत इति । एवमन्येपि शब्दाः । अस्य प्रयोगः—कुम्भशब्दोऽनेकविषयः एकपदत्वात् सेनादिशब्दवदिति ॥ ३४ ॥

[पूर्वोक्तपूर्वपक्षनिरासः]

दूषयति—

नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

अनेकलक्षणैरिति मध्यमपदलोपी समासः। अनेकविधलक्षणैरिति। गन्धादिभिश्च गुणैः बुद्ध्यादिभिश्चावयवैः सम्बद्ध एको भाव उत्पद्यते। अतः शब्दादेकार्थावगतौ शेषाऽनुक्तोऽवगम्यत इति गुणव्यतिरिक्तो गुणी अवयवव्यतिरिक्तश्चावयवीति विभक्तन्यायमेतत् ॥ ३५ ॥

[सर्वपृथक्त्ववाददूषणे हेत्वन्तरनिरूपणम्]

[1]तल्लक्षणव्यवस्थानादप्रतिषेधः ॥ ३६ ॥

न कश्चिदेको भाव इत्ययमयुक्तः प्रतिषेधः। कस्मात्? तल्लक्षणव्यवस्थानात्। न हि कुम्भ इत्युक्तेऽनेकोऽर्थो गम्यते। गृह्यते पुनरेकवचनान्तत्वादेकार्थ इति ॥ ३६ ॥

[सर्वशून्यतावादप्रस्तावः]

[2]अथायमपर एकान्तवादः—

---

[1] लक्षणव्यवस्थानादेवाप्रतिषेध इति प्रचलितः पाठः।

[2] सर्वशून्यतावादं प्रस्तौति— अथेति। सर्वमभाव इति प्रतिज्ञा। तत्र हेतुः—भावेष्वितरेतराभावसिद्धेरिति। सर्वेषां पदार्थानां परस्पराभावरूपतैव यतस्ततः सर्वमभाव इत्यर्थः।

सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥

यावद्भावजातं तत्सर्वमभावः । कस्मात्? भावेष्वितरेतराभावसिद्धेः । असत्प्रत्ययप्रतिषेधाभ्यां भावशब्दसामानाधिकरण्यात् सर्वमभावः अनुत्पन्नप्रध्वस्तपटवत् । सर्वो भावशब्दोऽसत्समानाधिकरणः प्रतिषेधसमानाधिकरणश्च प्रध्वस्तपटवत् । यथा नास्ति पट इति कथं नास्ति कदा च नास्तीति स्थाल्याद्यात्मनाऽनुत्पद्यमानो ध्वस्तश्चेति । सोऽयं घटशब्दोऽसत्प्रत्ययसमानाधिकरणो घटस्यात्यन्तासत्त्वं प्रतिपादयति । तथा च सर्वे भावा असत्प्रत्ययसमानाधिकरणास्तस्मात्सर्वमभाव इति ॥ ३७ ॥

[शून्यवादनिराकरणम्]

न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

स्वेन भावेन भावा भवन्तीति सूत्रार्थः । किं पुनरनेन सूत्रेण क्रियते; पूर्वसूत्रविरोधश्चोद्यते ।

स्वेन भावेन सद्भावाद्भावानां न सर्वमभावः । अथ कश्च स्वो भावो भावानां? द्रव्यगुणकर्मणां सदादिसामान्यम् । द्रव्याणां क्रियावदित्येवमादिर्विशेषः । स्पर्शपर्यन्ताः पृथिव्या इति प्रत्येकं चानन्तो भेदः । सामान्यविशेषसमवायानां च विशिष्टा धर्मा गृह्यन्ते । सोऽयमभावस्य निरुपाख्यत्वात्सम्प्रत्यायकोऽर्थभेदो न स्यात् । अस्ति त्वयम् । तस्मान्न सर्वमभावः ॥ ३८ ॥

[सर्वेषां भावानामापेक्षिकत्वात् भावानां स्वभावसिद्धिर्नास्तीति निरूपणम् ]

न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥

न स्वभावसिद्धिरापेक्षिकत्वात् । स्वेनात्मना न किञ्चित्सिद्धमतो न स्वभावसिद्धिरापेक्षिकी । यथा दीर्घह्रस्वे परापरे इति ॥ ३९ ॥

[स्वभावसिद्धौ साधकान्तरनिरूपणम् ]

उत्तरमाह सिद्धान्तवादी—

व्याहतत्वादहेतुः ॥ ४० ॥

यदि ह्रस्वापेक्षाकृतं दीर्घं ह्रस्वमनापेक्षिकं, अथ दीर्घापेक्षाकृतं ह्रस्वं दीर्घमनापेक्षिकं परस्परापेक्षयोश्च यदपेक्षयेतरज्जायते तदनापेक्षिकमिति उभयोरभावः एकस्याभावादिति ॥ ४० ॥

[सङ्ख्यैकान्तवादनिरूपणम् ]

अथेमे सङ्ख्यैकान्ताः । सर्वमेकं सदविशेषात्[1] । सर्वं द्वेधा नित्यानित्यभेदात् । सर्वं त्रिविधं ज्ञाता ज्ञानं ज्ञेयमिति । सर्वं चतुर्धा— प्रमाता प्रमाणं प्रमेयं प्रमितिरिति । तेषां प्रतिषेध सूत्रं—

---

[1] अत्रैके वर्णयन्ति—एकमित्यद्वैतवादः । तथा च ब्रह्मैवेकं निर्विशेषं सत्यं सर्वमन्यन्मिथ्या । यद्वा सर्वं प्रपञ्चजातमेकं द्वैतशून्यं— सदविशेषात् । घटः सन् पटः सन् इति प्रतीतेर्घटाभिन्नसदभिन्न पटस्य घटाभेदसिद्धेः । अन्येपीत्यनेन रूपसंज्ञासंस्कारवेदनानुभवाः पञ्चस्कन्धा इति वादिनो सौत्रान्तिका ग्राह्याः ।

सङ्ख्यैकान्ताऽसिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥

संख्यैकान्तानामसिद्धिः । कारणस्य प्रतिज्ञातार्थव्यतिरेकात् सर्वमेकमिति प्रतिज्ञां कृत्वा यदि प्रतिज्ञेयव्यतिरिक्तं साधनं ब्रुवति एकान्तो न सिध्यतीति । तच्च साधनमन्यत् प्रतिज्ञेयश्चार्थोऽन्य इति द्वैतप्रसक्तेः । एवं द्वैतादिष्वपि । अथ प्रतिज्ञेयव्यतिरिक्तं साधनं नास्ति, एवमप्येकान्तो न सिध्यति । साधनाभावान्न साध्यमिति ॥ ४१ ॥

न कारणावयवभावात् ॥ ४२ ॥

कारणस्य साध्यावयवत्वादिति सूत्रार्थः । साध्यावयव एव साधनम् । एवञ्च सति न साध्यव्यतिरिक्तं साधनमित्युक्तं भवति । न चासाधना सिद्धिरिति ॥ ४२ ॥

[उक्तेऽर्थे सिद्धान्तनिरूपणम्]

उत्तरवाद्याह—

निरवयवत्वादहेतुः ॥ ४३ ॥

साध्यावयव एव कारणमित्यहेतुरयम् । कुतः? निरवयवत्वात् प्रतिज्ञातार्थस्य सर्वमेकमित्येतस्मिन् प्रतिज्ञातार्थे न किञ्चिदपवृज्यते । अनपवर्गेण सर्वं पक्षीकृतमिति सर्वस्य निरवयवस्य पक्षीकरणान्न हेतुरस्ति । न च साध्यं हेतुर्भवितुमर्हतीति ॥ ४३ ॥

[फलपरीक्षायां संशयप्रदर्शनम्]

प्रेत्यभावानन्तरमुद्दिष्टं फलम् । तस्मिन्—

सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥

काचित् क्रिया सद्यःफला । यथा पचति दोग्धीति । तस्या सद्य.फलमोदनपयसी । काचित् कालान्तरफला । यथा कृषति वपतीति । तस्याः कालान्तरेण फलं न क्रियानन्तरं सस्याधिगमः । अस्ति चेयं क्रिया—अग्निहोत्रं जुहुयात्स्वर्गकाम इति । तस्याः फले सन्देहः । किमियं सद्यःफला? उत कालान्तरफलेति? ॥ ४४ ॥

[न सद्यः फलमिति निरूपणम्]

अत्र निर्णयः।ह—

न सद्यः कालान्तरोपभोग्यत्वात् ॥ ४५ ॥

स्वर्गः फलं श्रूयते । चोदितया च क्रियया नानर्थिकया शक्यं भवितुम् । न च तापादिकामोऽग्निहोत्रं जुहोति । तेन गम्यते हवनादिलक्षणक्रियामपेक्षमाणात् आत्ममनःसंयोगाद्विशुद्धेनाभिसन्धिना अनुगृहीता दात्मनि धर्म उत्पद्यत इति । स कालान्तरे अप्रतिबद्धयमानशक्तिः देशाद्यनुगृहीतः फलं ददाति । तच्च पतिते तस्मिन् देहे सम्भवति, देहान्तरापन्नस्यातो न सद्य इति ॥ ४५ ॥

[फलकारणस्य कर्मणः कालान्तरे विनष्टत्वान्न तदा फलमित्याशङ्का]

[1]कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४३ ॥

प्रध्वस्तायां प्रवृत्तौ प्रवृत्तिफलं न कारणमन्तरेणोत्पत्तुमर्हति । न खलु विनष्टात् कारणात् किञ्चिदुत्पद्यते इति ॥ ४६ ॥



[1] शङ्कते—कालान्तरेणेति । कालान्तरेण कर्मणः फलं न

[कर्मणः कालान्तरे फलमिति सदृष्टान्तमुपपादनम्]

उत्तरवाद्याह—

प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥ ४७ ॥

न ब्रूमो विनष्टात् कारणात् कार्यमुत्पद्यत इति। अपि तु अग्निहोत्रहवनादिलक्षणया क्रियया यथोक्तेन विधिना धर्मो जायत इत्युक्तम्। तस्मात्फलमिति। यथा फलार्थिना वृक्षस्य मूलसेकादिकर्म क्रियते। तस्मिंश्च प्रध्वस्ते पृथिवीधातुरब्धातुना सङ्गृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्तयति। स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषेण सन्निविशमानः पर्णादिफलं निर्वर्तयति। एवं परिषेकादि कर्म चार्थवत्। न च विनष्टात्फलनिष्पत्तिः। तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यते। स जातो निमित्तान्तरानुगृहीतः कालान्तरे फलं निष्पादयति। उक्तं चैतत् 'पूर्वकृतफलानुबन्धात् तदुत्पत्ति'-रिति ॥ ४७ ॥

[फलाभावाक्षेपः]

तदिदं—

नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् ॥ ४८ ॥

इति पूर्वपक्षसूत्रम्। प्राङ्निष्पत्तेर्निष्पत्तिधर्मकं नासदुपादाननियमात्। कस्य चिदुत्पत्तये किञ्चिदेवोपादेयं इत्युपादाननियमात् असद्भावे-समाने नोपपद्यत इति। नापि सत्। उत्पत्तेः प्राग्विद्यमानस्योत्पत्तिरनुप-

---

सम्भवति। हेतोस्तत्फलकारणस्य कर्मणो 'विनाशात्' विनष्टत्वादित्यर्थः।

पन्ना । नापि सदसत्—सदसतोर्वैधर्म्यात् । सदित्यर्थाभ्यनुज्ञा, असदित्यर्थ प्रतिषेधः । एतयोर्व्याघातो वैधर्म्यम् । व्याघाताद्व्यतिरेकानुपपत्तिरिति ॥ ४८ ॥

[प्रागुत्पत्तेरुत्पत्तिधर्मकमसदिति निरूपणम् ]

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा । कस्मात् ?—

उत्पादव्ययदर्शनात् ॥ ४९ ॥

वस्तुनः प्रागनुपलब्धिरूपस्य पश्चादुपलब्धिविपर्यासोऽसदुत्पादे सति युज्यते । विनाशश्चोपलब्धरूपस्य पुनरनुपलब्धिरिति । न चैतत्सर्व-नित्यत्ववादिनः सम्भवति । न हि सत्पक्ष उत्पादो न च विनाश इति उत्पादविनाशौ च प्रत्याचक्षाणेन लोको हेयः ॥ ४९ ॥

[असत्वपक्षे दोषोद्धार ]

बुद्धिसिद्धं तु तदसत् ॥ ५० ॥

नायं सत्वादुपादाननियमः, अपि तु सामर्थ्यात् । इदमनेन शक्यं निर्वर्तयितुं नेदमनेनेत्येवंबुद्ध्या सिद्धं कार्यं कृत्वा यत् यस्योत्पत्तये समर्थं तदुपादीयते न सर्वं सर्वस्य । न सर्वस्मात् सर्वमुत्पद्यमानं दृष्टमिति ॥ ५० ॥

[पारलौकिकफलाक्षेपः]

आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५१ ॥

यच्च मूलसेकादिकर्म, यच्च पर्णादिफलं तदुभयं वृक्षाश्रयम् । कर्म त्विह फलं चान्यत्रेति आश्रयव्यतिरेकात् वृक्षफलोत्पत्तिवदित्यसिद्धो दृष्टान्तः ॥ ५१ ॥

[कर्मफलयोरेकाश्रयत्वमुपपद्यत इति निरूपणम् ]

प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥

आश्रयव्यतिरेकोऽसिद्ध इति सूत्रार्थः । प्रीतिर्ह्यात्मप्रत्यक्षत्वादात्माश्रया । तदाश्रयमेव कर्म धर्मसंज्ञकम् ॥ ५२ ॥

[हेतोरव्यापकत्वापादनम् ]

न [1]पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ५३ ॥

पुत्रादिफलत्वेन निर्दिश्यते । ग्रामकामो यजेतेत्यादौ न पुत्राद्यात्मनि वर्तते । तत्र यदुक्तं [2]प्रीतिः फलमित्येदयुक्तमिति ॥ ५३ ॥

[हेतोरव्यापकत्वदोषनिराकरणम् ]

तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥ ५४ ॥

पुत्रादिसम्बन्धात् फलं प्रीतिलक्षणं निष्पद्यत इति पुत्रादिषु फलवदुपचारः । यथान्ने प्राणशब्दो अन्नं वै प्राणा इति, अन्नसाधनत्वात्प्राणानां, एवं प्रीतिकरणत्वात्पुत्रादौ फलोपचार इति ॥ ५४ ॥

[दुःखपरीक्षाप्रकरणम् ]

फलानन्तरं दुःखमुद्दिष्टमुक्तं च—बाधनालक्षणं दुःखमिति । तत्किमिदं सर्वलोकसाक्षिकस्य सुखस्य प्रत्याख्यानं आहोस्विदन्यः कल्पः इति ।

---

[1]अस्त्वात्माश्रयं स्वर्गादि, तथाप्यव्यापको हेतुः पुत्रादिफलेभ्यो निवृत्तेरित्याशयवान् शङ्कते—नेति ।

[2]प्रीतेरात्माश्रयत्वादित्यादिना यदुक्तं तदयुक्तमित्यर्थः ।

अन्य इत्याह । कथं न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम् । अयं तु जन्ममरणप्रबन्धानुभवनिमित्तात् दुःखनिर्विण्णस्य दुःखभावनोपदेशः । तदिदमाह—

विविधबाधनायोगात् दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥

तत्र जायत इति जन्म । तेन शरीरेन्द्रियबुद्धयः उपदिश्यन्ते । तस्य जन्मनो उत्पत्तिर्जन्मोत्पत्तिः । विविधा तु बाधना हीना मध्यमा चोत्कृष्टा चेति । उत्कृष्टा नारकिणाम् । तिरश्चां तु मध्यमा । मनुष्याणां तु हीना । देवानां हीनतरा । एवं सर्वमुत्पत्तिस्थानं विविध-बाधनानुषक्तं पश्यतः सुखे सुखसाधनेषु च दुःखसंज्ञा व्यवतिष्ठते । ततः सर्वलोकविषया तृष्णा विच्छिद्यते । तृष्णाप्रहाणात् सर्वस्मात् दुःखात् प्रमुच्यते । यथा विषयोगात् पयो विषमिति बुद्ध्यमानो मरणदुःखं न प्राप्नोतीति ॥ ५५ ॥

न सुखस्याप्यन्तराळनिष्पत्तेः ॥ ५६ ॥

न त्वयं दुःखोद्देशः सुखप्रत्याख्यानाय । कस्मात्? सुखस्यापि बाधनान्तराळनिष्पत्तेः सर्वशरीरिणां तदशक्यं प्रत्याख्यातुमिति ॥ ५६ ॥

इतश्च—

[1]बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५७ ॥

पर्येषणं प्रार्थना । पर्येषणस्य दोषः, प्रार्थितस्यासम्पत्तिः सम्पन्नस्य

---

[1]अप्रतिषेधोऽप्रत्याख्यानम् । कुतः सुखस्याप्रतिषेधः? 'वेदयतः'—

च न्यूनत्वम्। बहु प्रत्यनीकं सम्पद्यत इत्यस्मात्पर्येषणदोषान्नान विघो मनःसन्तापो भवतीत्येवं वेदयतो बाधनाया अनिवृत्तिः। बाधनानिवृत्तेश्च दुःखसंज्ञा भावनमुपदिश्यत इति ॥ ५७ ॥

दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥

दुःखसंज्ञा भावनोपदेशः। यश्चास्य सुखार्थं यतमानस्य दुःखविकल्पो भवति तं सुखाङ्गभूतं सुखमिति मन्यमानः पुनस्तदुपादत्ते, पुनर्जायत इति। न संसारमतिवर्तते सर्वं दुःखमिति। तदस्याः सुखसंज्ञायाः प्रतिक्षेपो दुःखसंज्ञाभावनमुपदिश्यते दुःखानुषङ्गात् दुःखं जन्मेति—न सुखस्याभावात् ॥ ५८ ॥

[अपवर्गपरीक्षाप्रकरणम्]

[ऋणाद्यनुबन्धादपवर्गाभावशङ्का]

दुःखोपदेशानन्तरमपवर्गः सम्प्रत्याख्यायते—

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः[1] ॥ ५९ ॥

ऋणानुबन्धात् जायमानो वै ब्राह्मणः त्रिभिर्ऋणैर्ऋणवान् जायते। ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्य इति। एवं श्रुति-

---

अनुभवतः 'पर्येषणदोषात्' तृष्णानुवर्तनात् 'बाधनानिवृत्तेः' बाधनाबुद्धेरनिवृत्तेरिति योजना।

[1] अपवर्गाभाव इति प्रतिज्ञा। तत्र त्रयो हेतवः—ऋणानुबन्धात्—क्लेशानुबन्धात्—प्रवृत्त्यनुबन्धादिति।

सिद्धास्क्लेशानुबन्धात् जननमरणादिनिमित्तात् प्रवृत्त्यनुबन्धाद्वा नापवर्ग इति । अनुबन्धः सर्वदा करणीयतेति ॥ ५९ ॥

[ऋणशब्दस्यौपचारिकत्वप्रतिपादनम्]

प्रधानशब्देनानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥

नायमृणैरिति प्रधानशब्दः। यत्र खल्वेकः प्रत्यादेयं ददाति, इतरः प्रतिदेयं गृह्णाति तत्रायं ऋणशब्दः प्रधानं भवति। अन्यत्र भाक्तः सः। क उपमार्थः? अस्वातन्त्र्यम्। यथा ऋणवानस्वतन्त्रः। एवं गृहस्थो यजमानः कर्मसु परतन्त्रो जायत इति।

गार्हस्थ्यलिङ्गं च मन्त्रब्राह्मणं कर्माभिवदति। यच्च मन्त्रब्राह्मणं कर्माभिवदति तत्पत्नीसम्बन्धादिना गार्हस्थ्यलिङ्गेनोपपन्नम्। तस्माद्गृह-स्थोऽयं जायमानोऽभिधीयते।

अथापि विहितं वानूद्येत कामाद्वार्थः परिकल्प्येत। विहितानु-वचनं न्याय्यमिति। ऋणवानिवास्वतन्त्रो गृहस्थः कर्मसु प्रवर्तते इत्युप पन्नं वाक्यस्य सामर्थ्यम्। फलस्य हि साधनानि प्रयत्नविषयो न फलम्। तानि संपन्नानि फलाय कल्पन्ते। विहितं च जायमानं विधीयते च। तेन यः संबद्धयते सोयं यजमान इति।

"प्रत्यक्षविधानाभावादिति चेद्" न प्रतिषेधस्यापि प्रत्यक्षाभि-धानाभावात्। ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयते। ऋचश्च ब्राह्मणानि च चापवर्गाभिवादीनि भवन्ति। ऋचश्च तावत्—

कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः ।
अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः ॥
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ।
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ॥
तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥
(वाजसनेयसंहिता ३१–१८ । तैत्तिरीयारण्यक ३–१२–७)

अथ ब्राह्मणानि—"त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयो, ब्रह्मचर्याचार्यकुलवासीति तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्, सर्व एवैते पुण्यलोका भवन्ति । ब्रह्मसंस्थोऽमृतमेति" । (छांदोग्योपनिषत् २–२३–१) "एतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीति" (बृहदारण्यक ४–४–२२) एवमन्ये च ।

तत्र यदुक्तं ऋणानुबन्धादपवर्गाभावइत्यतदयुक्तमिति । 'ये चत्वारः पथयो देवयाना' (तैत्तिरीयसंहिता ५–७–२–३) इति च चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः ।

फलार्थिनश्चेदं ब्राह्मणम्, जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चेति कथं अवगम्यते, उच्यते—

[ऋणानुबन्धादपवर्गप्रतिषेध इति निरूपणम्]

**समारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥**

प्राजापत्यामिष्टिं निरुप्य तस्यां च सर्ववेतसं हुत्वा आत्मन्यग्नीन्

समारोप्याथ ब्राह्मणः प्रव्रजेत् इति श्रूयते[1] । तेन जानीमः प्रजावित्तलोकैषणाभ्यो व्युत्थितस्य निवृत्ते फलार्थित्वे समारोपण विधीयते इति ।

एवञ्च ब्राह्मणानि—सोऽन्यद्वृतमुपाकरिष्यमाणो याज्ञवल्क्यो मैत्रेयीमिति होवाच प्रव्रजिष्यन्वा अरे अहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्या सहान्तं करवाणीति । अथाप्युक्तानुशासनासि मैत्रेयि एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज इति (बृहदारण्यकोपनिषत्) ॥ ६१ ॥

[स्वपक्षे साधकान्तराभिधानम्]

[2]पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥

जरामर्ये कर्मण्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणि इति प्रसज्यते । एषणाव्युत्थानं न श्रूयते । एतद्ध स्म वै पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति । एषणाभ्यश्च व्युत्थितानां पात्रचयान्तानि कर्माणि नोपपद्यन्त इति नाविशेषेण कर्तुः प्रयोजकं फलं भवतीति । चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः । 'तदप्रमाणमिति चेत्' न, प्रमाणेन तत्प्रामाण्यस्याभ्यनुज्ञानात् । विषयव्यवस्थानाच्च तत्प्रामाण्योप-

---

[1] साग्निकस्य चतुर्थाश्रमप्रवेशोऽत्राभिधीयते । मनुरप्याह यथा—

प्राजापत्यां निरूप्येष्टिं सार्ववेतसदक्षिणाम् ।

आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेत् गृहात् ॥

[2] स्वपक्षे साधकान्तरमाह—पात्रेति ।

पत्तिः । यज्ञो मन्त्रब्राह्मणात्मकवेदभागस्य विषयः लोकमितिहासपुराणयोः, लोकव्यवहारसंस्थापनं धर्मशास्त्रस्य । न चैकेन सर्वं प्रतिज्ञाप्यते इति यथाविषयमेतानि प्रमाणानि इन्द्रियवदिति ॥ ६२ ॥

[क्लेशानुबन्धादनपवर्ग इति मतदूषणम्]

यत्पुनरेतत् क्लेशानुबन्धस्याविच्छेदादिति—

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥**

[1]यथा सुषुप्तस्य स्वप्नादर्शने क्लेशानुबन्धो विच्छिद्यते तथा मुक्तस्यापीति ॥ ६३ ॥

[प्रवृत्त्यनुबन्धादनपवर्ग इति मतनिरसनम्]

यदपि प्रवृत्त्यनुबन्धादिति—

**न प्रवृत्तिः [2]प्रतिसन्धानाय [3]हीनक्लेशस्य ॥ ६४ ॥**

प्रक्षीणेषु रागद्वेषमोहलक्षणेषु क्लेशेषु प्रवृत्तिर्न प्रतिसन्धानाय ।

---

[1] रागादिक्लेशाविच्छेद एवासिद्धः । सुषुप्तावस्थायां विच्छेददर्शनात् इत्याह—यथेति ।

[2] प्रतिसंधानाय—पुनर्जन्मार्थम् ।

[3] हीनक्लेशस्य—आत्मनः ।

प्रतिसन्धानं तु पूर्वं जन्मनिवृत्तौ पुनर्जन्म। तच्चादृष्टकारितं तस्यां प्रहीणायां पूर्वजन्माभावेऽप्रतिसन्धानमपवर्गः ॥ ६४ ॥

अत्र चोदयति—

न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ६५ ॥

नोपपद्यते क्लेशानुबन्धविच्छेदः। कस्मात्? अनादिरयं क्लेश-सन्ततिः। न चानादिः शक्य उच्छेत्तुमिति ॥ ६५ ॥

[अत्र सिद्धान्तैकदेशिनः परिहारः]

अत्र कश्चित्परिहारमाह—

प्रागुत्पत्तेरभावनित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् ॥ ६६ ॥

यथाऽनादिः प्रागुत्पत्तेरभावः, उत्पन्नेन भावेन निवर्त्यते, एवं स्वाभाविकी क्लेशसन्ततिरनित्येति ॥ ६६ ॥

[मतान्तरमालम्ब्य परिहारशङ्का]

अपर आह—

अणुश्यामतानित्यत्ववद्वा ॥ ६७ ॥

यथाऽनादिरणुश्यामता अथ चाग्निसंयोगादनित्या तथा क्लेशसन्ततिरपीति ॥ ६७ ॥

[रागादीनामनित्यत्वसमर्थनम्]

अयं तु शुद्धसमाधिः—

['ज्ञानसमवेते'त्यादि सूत्रोक्तमेकदेशिमतं निराकरिष्णो एकदेशिनः शङ्का]

अत्र कस्यचिद्दूषणमाह—

आत्मप्रेरण–यदृच्छा–ज्ञताभिश्च न संयोगविशेषः ॥ ३२ ॥

मनसो हि बहिःप्रदेशे विषयेण संयोगविशेषस्त्रेधा स्यात्—आत्मप्रेरणेन, यदृच्छया, ज्ञतया वा। नाद्यः तस्य स्मरणीयज्ञानपूर्वकतया प्रागेव स्मरणापत्तेः। न द्वितीयः; आकस्मिकत्वे मनोगमनस्य जगतोऽपि तथात्वं स्यात्। न तृतीयः ज्ञातृत्वं न मनसो धर्म इति प्रागेवोपादितम्। ॥ ३२ ॥

[पूर्वोक्तशङ्कानिरासः]

दूषणं परिहरति—

व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३३ ॥

नृत्यादिकं पश्यतो कण्टकादिना पादव्यथनेन मनः संयोगो यथा जायते; तथैवात्रापीति भावः। अन्यथा मनःसंयोगेऽप्युक्तदोषाः स्युः। अदृष्टविशेषकल्पनेन दोषोद्धारे, अत्रापि समम् ॥ ३३ ॥

[स्मरणायौगपद्यमुपपादयति]

स्मरणाऽयौगपद्यमुपपादयति—

प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावात् युगपदस्मरणम् ॥ ३४ ॥

प्रणिधानं चित्तैकाग्र्यं—सुष्मूर्षेति यावत्। ज्ञानपदोत्तरमादिपदं योज्यं; तेन लिङ्गज्ञानादीनामित्यर्थः सम्पन्नः। लिङ्गज्ञानमुद्बोधकम्।

आदिपदं इच्छा संस्कारादिग्राहकम् । अयुगपद्भावात्—क्रमेणोत्पादनात् । तथा च यदि युगपदुद्बोधकानि भवन्ति तदा तावद्विषयकमपि स्मरणमिष्यत एव । यथा पदज्ञानादौ ॥ ३४ ॥

[ज्ञानेच्छादीनां वैय्यधिकरण्यनिरासः]

ज्ञानं पुरुषधर्मः । इच्छादयस्त्वन्तःकरणधर्माः । यथा च साङ्ख्यानां गीतिः—''पुरुषचैतन्यमेकमेव कूटस्थनित्यं सत् तत्तदर्थाकारपरिणत-बुद्धितत्वप्रतिबिंबविभ्रमवशाद्भिन्नमिवोपजनापायधर्मकं विज्ञानमिति वृत्तिरिति चाख्यायते । इच्छद्वेषादयस्तु वस्तुत उपजनापायधर्माणो अन्तःकरणस्येति दर्शनम्'' । तदेतन्मतं निराकर्तुमाह—

ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३५ ॥

ज्ञस्य ज्ञातुरात्मनः । आरम्भनिवृत्त्योः—प्रवृत्तिनिवृत्त्योः । इच्छा-द्वेषनिमित्तत्वं विद्यत इति भावः । प्राप्तीच्छाप्रयुक्तस्यात्मनो सुखसाधना-वाप्तये यःसमीहाविशेषः प्रारभ्यते स—आरम्भः । जिहासाप्रयुक्तस्य दुःखसाधनपरित्यागो निवृत्तिः । तथा च प्रवृत्तिं प्रतीच्छाया निवृत्तिं प्रति द्वेषस्य च सामानाधिकरण्येन हेतुत्वादात्मनो ज्ञस्येच्छाश्रयत्वमभ्युपेयं ; नान्तःकरणस्य । एवं चैककर्तृकत्वं ज्ञानेच्छाप्रयत्नसुखदुःखादीनां समानाश्रयत्वं च । तस्माज्ज्ञस्यैव सुखदुःखेच्छादयो धर्मः नान्तःकरण-स्येति ॥ ३५ ॥

[ज्ञानादीनां पार्थिवादिपरमाणुपुञ्ज एवाश्रयोऽस्त्विति शङ्का]

नन्वस्तु ज्ञानेच्छादीनां सामानाधिकरण्यम् । परमेषामधिकरणं परमाणुपुञ्ज एव स्यादिति शङ्कते—

तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ ३६ ॥

पार्थिवादिदेहेषु ज्ञानादिप्रतिषेधः न शक्यते कर्तुम् । कुतः ? इच्छाद्वेषयोः आरम्भनिवृत्तिलिङ्गत्वात् । तयोश्चेष्टाविशेषलिङ्गत्वाच्चेष्टायाश्च शरीरे प्रत्यक्षादिमानसिद्धत्वात् ॥ ३६ ॥

समाधानार्थं प्रतिबन्दिमाह—

परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३७ ॥

आरम्भनिवृत्त्याधारत्वेनैव यदि ज्ञानाद्यधिकरणत्वं शरीरस्याभ्युपगम्यते तर्हि उद्यमननियतनरूपारम्भनिवृत्तिदर्शनात्परश्वादिष्वपि ज्ञानाद्याधारत्वप्रसङ्गः । तथा च पार्थिवाद्येष्वप्रतिषेध इति परस्योक्तमनेकान्तमिति भावः ॥ ३७ ॥

चेतनाचेतनयोश्चेष्टानियमं निरूपयति—

नियमाऽनियमौ तु तद्विशेषकौ ॥ ३८ ॥

नियमः—प्रवृत्यादेर्जन्यता । अनियमः, तज्जन्यतातिरिक्तः पदार्थः तौ । तद्विशेषकौ—तदितरेतरव्यावर्तकौ । तथा च समवायेन ज्ञानेच्छादयश्चेतनधर्माः । अवच्छेदकतया शरीरे तेषां जन्यजनकभावः । परश्वादौ तु यत्नविषयतया क्रिया इति भेदः ॥ ३८ ॥

[इच्छादीनां मनोगुणत्वाभावे युक्त्यन्तराभिधानम्]

नेच्छादयो मनोगुणा इत्याह—

यथोक्तहेतुत्वात्पारतन्त्र्यात्स्वकृताभ्यागमाच्च
न मनसः ॥ ३९ ॥

इच्छादय इति शेषः । यथोक्तहेतुत्वात्—ज्ञानेच्छादीनां सामानाधिकरण्येन हेतुहेतुमद्भावात् । पारतन्त्र्यात्—मनसश्चेतनसहकारित्वात् । इच्छादयो न मनसो गुणा इति भावः ।

अत्रैव हेत्वन्तरं—'स्वकृताभ्यागमादिति' स्वकृतात्कर्मणोऽभ्यागमो भोगः । मनसः कृत्यादिमत्त्वे कर्मणः स्वकृतत्वाभावेन ज्ञस्य सुखादिभोगो न स्यात् । तस्मान्न मनो ज्ञानेच्छाद्याश्रयः । किन्तु ज्ञ एव तादृशः ॥ ३९ ॥

[परिशेषादात्मन एव इच्छाद्याश्रयत्वोपपादनम्]

उपसंहरति—

परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४० ॥

प्रसक्तप्रतिषेधे अन्यत्राऽप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः—परिशेषः । तथा च भूतेन्द्रियमनसां प्रतिषेधे, अन्यत्राप्रसङ्गाच्छिष्यमाणे आत्मनि संप्रत्ययः—ज्ञानाश्रयत्वनिर्धारणं 'परिशेष' इत्यर्थः । एवं 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्यादीनामुपपत्तेः—उपपन्नत्वात् आत्मा इच्छाद्याश्रय इति युक्तमुक्तम् ॥ ४० ॥

[स्मृतेरात्मगुणत्वस्य समर्थनम्]



शिष्यबुद्धिवैशद्याय स्मृतेरात्मगुणत्वं विशिष्याह—

स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४१ ॥

स्मरणमात्मन एव गुणः । कुतः? ज्ञस्वाभाव्यात् । ज्ञानवत्स्वाभाव्यात् । ज्ञानत्वावच्छिन्नवत्वं ह्यात्मनो स्वभावः । स्मृतेश्च बुद्धिसन्तानधर्मत्वे 'अहं जानामी'त्याद्यनुभवविरोधः ॥ ४१ ॥

[स्मृतिहेतूनामभिधानम्]

स्मृतिहेतूनामयौगपद्यादस्मरणमित्युक्तं तत्र स्मृतिहेतूनाह—

प्रणिधान-निबन्धाभ्यास-लिङ्ग-लक्षण-सादृश्य परिग्रहाश्रयाश्रित-सम्बन्धानन्तर्य-वियोगैककार्यविरोधातिशयप्राप्ति-व्यवधान-सुखदुःखेच्छा-द्वेष-भयार्थित्व-क्रियाराग-धर्माधर्म-निमित्तेभ्यः ॥ ४२ ॥

द्वन्द्वान्ते श्रूयमाणस्य निमित्तशब्दस्य प्रणिधानादिना प्रत्येकमन्वयः । प्रणिधानं मनसो विषयान्तरासञ्चारः । निबन्धनमेकत्र कथनम् । यथा प्रमाणेन प्रमेयस्मरणम् । अभ्यासः पुनःपुनर्ग्रहः । लिङ्गं व्याप्यम् । व्याप्येन धूमेन [धूमज्ञानेन] व्यापकस्याग्नेः स्मरणमानुभविकम् । लक्षणं असाधारणो धर्मः । यथा ज्ञातं कपिध्वजं अर्जुनस्य स्मारकम् । सादृश्यं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वम् । यथा चन्द्रमसं दृष्टवतो प्रेयस्याः स्मरणम् । परिग्रहः—स्वीकारः । स्वीकृतवस्तुना दातुः स्मरणम् । आश्रयाश्रितौ राजादितत्परिजनौ । परस्परस्मारकौ । सम्बन्धः—गुरुशिष्यभावादिः । आनन्तर्यं—प्रोक्षणावघातादेः । वियोगः—दूरगमनम् । तच्च प्रेमास्पदानां स्मारकम् । एककार्याः—अन्तेवासिप्रभृतयः । विरोधः—सहाऽनवस्थानम् । अहिनकुलयोरन्यतरदर्शनेनान्यतरं स्मर्यमाणमनुभूयते ।

अतिशयः—आधिक्यम् । उपनयनदिना संस्कृते वटौ आचार्यत्वस्मारकः । प्राप्तिः—प्रापणम् । धनाप्तिर्दातारं धनिकं स्मारयति । व्यवधानम्—आवरणम् । यथा खड्गादेः कोषादिः । सुखदुःखयोरन्यतरस्य ताभ्यां प्रयोजकस्य वा स्मरणम् । इच्छाद्वेषौ यद्विषयकौ तत्स्मारकौ । भयं—मृतेस्तद्धेतोर्वा स्मारकम् । अर्थित्वं दातुः । क्रिया व्यापारः । यथा शाखादेर्व्यापारः वायुस्मारकः । रागो रक्तिः । तया पुत्रादेः स्मरणम् । धर्माधर्माभ्यां जन्मान्तरानुभूतवस्तुविशेषस्मरणम् । त एते स्मृति हेतवः ॥ ४२ ॥

[चतुर्भिस्सूत्रैः बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ]

बुद्धेर्बुद्ध्यन्तराद्विनाशः प्रागुक्तः । स च स्वतृतीयक्षणवृत्तिध्वंसप्रतियोगित्व एव सम्भवति । तच्च न सम्भवति । एकस्या एव बुद्धेर्विषयान्तरसञ्चारविरहादिसत्त्वे बहुतरक्षणस्थायित्वात् इत्यताह—

कर्मानवस्थायिग्रहणात् ॥ ४३ ॥

अनवस्थायिन्याः शरीरादिकर्मधाराया प्रत्यक्षधारापि वाच्या । न चाद्यबुद्धेरुत्तरग्राहकत्वं विरम्यव्यापाराऽभावात् । पूर्वपूर्वस्य परतःपरतोऽननुभवाद्विनाशसिद्धावाश्रयनाशादेरभावाद्विरोधिगुणस्यैव नाशकत्वमिति । ॥ ४३ ॥

शङ्कते—

अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् ॥ ४४ ॥

यद्याशुविनाशिनी बुद्धिस्यात्तर्हि योग्याशेषविशेषधर्मविशिष्टधर्मि-

ग्राहिणी न स्यात् विद्युत्सम्पातकालीनवस्तुग्रहणवत् । न चैवं तस्मान्न तथेत्यर्थः ॥ ४४ ॥

उत्तरयति—

हेतूपादानात्प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४५ ॥

विद्युत्सम्पातदृष्टान्तेन प्रतिषेद्धव्यस्य बुद्धेराशुविनाशित्वं अभ्युपगतम् । तथा चाशंतो बाधः ॥ ४५ ॥

समाधानान्तरमाह—

प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ॥ ४६ ॥

यथा प्रदीपार्चिषां सन्तन्यमानानामनवस्थायित्वेऽपि अभिव्यक्तग्रहणं तथाऽन्यत्रापि स्यात् । विद्युत्सम्पातस्थले या बुद्धिरुत्पन्ना सा स्वविषये व्यक्तैवेति भावः ॥ ४६ ॥

[बुद्धेः शरीरगुणव्यतीरेकप्रकरणम् ]
[चेतना शरीरगुण इत्याशङ्का]

चेतना शरीरगुणः । सति शरीरे भावादसति शरीरेऽभावात्—

द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४७ ॥

पार्थिवे चन्दनादौ द्रव्ये स्वगुणस्य रूपादेः परगुणस्य सम्बन्धेन आप्यशीतस्पर्शादेः उपलब्धेः । एवं शरीरेऽपि रूपादेरौष्ण्यादेश्च ग्रहणाद्विप्रतिपत्तिः । बुध्यादिः शरीरगुणो न वेति ॥ ४७ ॥

[न शरीरगुणश्चेतना]

सिद्धान्तमाह—

यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ४८ ॥

न रूपादिहीनं शरीरं गृह्यते । चेतनाहीनं तु गृह्यते यथोष्णताहीना आपः । तस्मान्न शरीरगुणश्चेतनेति । तथा चानुमा—"बुद्ध्यादिकं न शरीरगुणः अयावद्द्रव्यभावित्वात् शब्दवदिति ॥ ४८ ॥

[पिठरपाकवादिमतेन व्यभिचाराशङ्का]

पिठरपाकवदिमतेन शङ्कते—

न पाकजगुणान्तरोत्पत्तेः ॥ ४९ ॥

द्रव्यस्य नात्यन्तं रूपोपरमो भवति प्राक्तनरूपविनाशेऽपि रूपान्तरं पाकाज्जायत एव । तथा च व्यभिचार इति भावः ॥ ४९ ॥

[पूर्वोक्तव्यभिचारनिरसनम्]

सिद्धान्तमाह—

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५० ॥

यावत्सु द्रव्येषु पूर्वगुणप्रतिषेधस्तावत्सु प्रतिद्वन्द्विनो गुणान्तरस्य दर्शनं—यथा श्यामनिवृत्तौ रक्तादीनामिति । न पुनः शरीरे चेतनाविपरीतं गुणान्तरमुपलभ्यते चेतनामात्रोपरमस्त्वत्यन्तमिति ॥ ५० ॥

[शरीराव्यापकत्वेन ज्ञानादीनां शरीरगुणत्वाभावः]

इतश्च न शरीरगुणश्चेतना—

शरीराव्यापित्वात् ॥ ५१ ॥

शरीरविशेषगुणानामिति शेषः । ज्ञानसुखादिकं तु न शरीर-

विशेषगुणः । शरीराऽव्यापकत्वात् । शरीरव्यापकत्वं च सर्वावयवावच्छेदेन विद्यमानत्वम् । ज्ञानादीनां तु हृदयरूपपरिमितदेशवृत्तित्वान्न शरीरगुणत्वम् ॥ ५१ ॥

न केशनखादिष्वनुपलब्धेः ॥ ५२ ॥

न रूपादीनामपि शरीरव्यापकत्वं, 'केशनखादिष्वनुपलब्धेः' ॥ ५२ ॥

परिहरति—

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५३ ॥

इन्द्रियाश्रयत्वं शरीरस्य लक्षणम् । त्वक्पर्यन्तं हि जैवमनः सुखदुःखसंवित्त्यायतनं शरीरम् । तस्मान्न केशनखादिषु चेतनोत्पद्यते । [1]अर्थकारितस्तु शरीरोपनिबन्धः केशादीनामिति ॥ ५३ ॥

[बुद्धेः शरीरगुणत्वनिरासः]

इतश्च न शरीरगुणश्चेतना—

शरीरगुणवैधर्म्यात् ॥ ५४ ॥

द्विविधः शरीरगुणः । अप्रत्यक्षश्च गुरुत्वम् । बाह्येन्द्रियग्राह्यश्च रूपादिः । [2]विधान्तरं तु चेतना न करणाप्रत्यक्षा सुसंवेद्यत्वात् । नाऽतीन्द्रिया मनोविषयत्वात् । तस्माद्द्रव्यान्तरगुण इति ॥ ५४ ॥

---

[1] अर्थकारित इति—शरीरान्तर्वर्तिरक्तमज्जादिधातुव्यापारजनित इत्यर्थः ।

[2] द्विविधस्याऽपि वैलक्षण्यं चैतन्यस्य दर्शयति— विधान्तरमिति ।

चोदयति—

न रूपादीनामितरेतरवैधर्म्यात् ॥ ५५ ॥

इतरेतरविधर्माणो रूपादयः न शरीरगुणत्वं जहाति। एवं रूपादिवैधर्म्येऽपि चेतना शरीरगुणत्वं न हास्यतीति ॥ ५५ ॥

[बुद्धेः सप्रमाणं शरीरगुणत्वप्रतिषेधः]

परिहरति—

ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ ५६ ॥

अप्रत्यक्षत्वाच्चेति। यथेतरेतरविधर्माणो न द्वैविध्यमतिवर्तन्ते, तथा चेतनापि न द्वैविध्यमतिवर्तेत यदि शरीरगुणःस्यात्। अतिवर्तते तु तस्मान्न शरीरगुणश्चेतना इति। भूतेन्द्रियमनसो सिद्धे सत्यारम्भो दार्ढ्यार्थ इति। अत्र प्रयोगः—न शरीरगुणश्चेतना निमित्तान्तराऽभावे विरोधिगुणदर्शने च सत्ययावद्द्रव्यभावित्वात्। अ[1]प्स्वु औष्ण्यवदिति। एवं परीक्षिता बुद्धिः ॥ ५६ ॥

[मनः परीक्षायां एकत्वसमर्थनम्]

अथ मनः परीक्ष्यते। तत्प्रतिशरीरमेकमनेकं वेति विचारे—

[2]ज्ञानायौगपद्यादेकं मनः ॥ ५७ ॥

अयुगपज्ज्ञानानि भवन्ति, एतत्प्रत्यक्षसिद्धम्। एतच्च मनस एकत्वं

---

[1] प्सु

[2] बुद्धिरिदानीं परीक्षिता। इतः परं मनः परीक्षा। तत्र किमेक-

साधयति। कथं? यदि बहूनि मनांसि स्युः। प्रतीन्द्रियं मनस्संबन्ध इति युगपदनेकार्थसन्निधाने युगपज्ज्ञानानि भवेयुः। न तु भवन्ति। तस्माद्विषयान्तरेषु प्रत्ययपर्यायादेकं मन इति ॥ ५७ ॥

[मनसोऽनेकत्वाऽऽशङ्का]

चोदयति—

न युगपदनेकक्रियोपलब्धेः ॥ ५८ ॥

अथ खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यतीत्याद्याः क्रियाः युगपद्भवन्तीति प्राप्तं मनसो बहुत्वमिति ॥ ५८ ॥

[पूर्वोक्तशङ्कानिरसनपूर्वकं मनसः एकत्वसमर्थनम्]

परिहरति—

अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ॥ ५९ ॥

आशुसञ्चारादलातचक्रस्य भ्रमतो विद्यमानः क्रमो न गृह्यते इति युगपत्क्रिया भवन्तीत्यभिमानो भवति ॥ ५९ ॥

[अणु मनः इति समर्थनम्]

यथोक्तहेतुत्वाच्चाणु ॥ ६० ॥

अणु मनः एकञ्चेति धर्मसमुच्चयः। य एवैकत्वे हेतुर्मनस उक्तः

---

मेव मनः चक्षुरादिसहकारितयाऽभ्युपगम्यते? मनः पञ्चकं वेति सन्देहे; मनः पञ्चकमेवोचितम्। तेन प्रत्येकसकलमनःसंबन्धासम्बन्धाभ्यां व्यासङ्गयौगपद्ये उपपद्येते इति पूर्वपक्षिते सिद्धान्तसूत्रमिदं—ज्ञानायौगपद्येति।

ज्ञानाऽयौगपद्यम् ; तेनैवाऽणु मनोऽवसातव्यमिति ॥ ६० ॥

[शरीरस्यादृष्टजन्यत्वोपपादनम् ]

मनसः खलु भोः सेन्द्रियशरीरे वृत्तिरिति । शरीरे विचारिते मन एव विचारितं भवत्यतः पुनः शरीरं विचार्यते—किमयं पुरुषकर्मनिमित्तः शरीरसर्गः ? आहोस्वित् भूतमात्रनिमित्त इति विप्रतिपत्तेः संशयः । अत्रेदं तत्वं—

पूर्वकृतफलाऽनुबन्धात्तदुत्पत्तिः ॥ ६१ ॥

पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतम् । तस्य फलं—तज्जनितौ धर्माधर्मौ । तस्य फलस्याऽनुबन्धः—आत्मसमवेतस्य अवस्थानम् । तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य ; न स्वतन्त्रेभ्य इति ।

अयं न्यायोऽभिधीयते—तत्तत्पुरुषविशेषगुणप्रेरितभूतपूर्वकं शरीरं, कार्यत्वे सति पुरुषार्थक्रियासामर्थ्यात् । यत्पुरुषार्थसमर्थं तत्पुरुषगुणविशेषप्रेरितभूतपूर्वकं दृष्टम् । यथा रथादीति ॥ ६१ ॥

[शरीरसृष्टौ अदृष्टानपेक्षत्वशङ्का]

अत्र नास्तिक आह—

भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् ॥ ६२ ॥

यथा कर्मनिरपेक्षेभ्यो निर्वृत्ताः सिकतादिमूर्तयः पुरुषार्थकारित्वादुपादीयन्ते तथा शरीरसर्गोऽपीति ॥ ६२ ॥

[पूर्वोक्ताशङ्कानिरासः]

न साध्यसमत्वात् ॥ ६३ ॥

यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या[1] तथा सिकतादीनामप्यकर्मनिमित्तः सर्गः साध्यः । तस्मादसाधनमिति सिकतादीनामपि पुरुषकर्मनिमित्त एव सर्गः पुरुषार्थक्रियासमर्थत्वात् भूतादिवत् इति ॥ ६३ ॥

[शरीरोत्पत्तौ मातापित्रोर्निमित्तत्वात् न मृदादिदृष्टान्तसाम्यमिति निरूपणम् ]

विषमश्चायमुपन्यासः । भूतेभ्यो मूर्त्युपादानवदिति—

नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६४ ॥

न निर्बीजा इमा मूर्तयः बीजपूर्विका हि शरीरोत्पत्तिः । मातापितृशब्देन लोहितरेतसि बीजभूते गृह्येते । तत्र [2]सत्वस्य गर्भवासाऽनुभवनीयं कर्म पित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाश्रये शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्ति इति चोपपन्नं बीजाऽनुविधानमिति ॥ ६४ ॥

[शरीरोत्पत्तौ निमित्तान्तरकथनम् ]

तथाऽहारस्य ॥ ६५ ॥

उत्पत्तिनिमित्तत्वादिति प्रकृतम् । भुक्तं पीतं चाहारः तस्य पाकान्द्रसवद्द्रव्यं निवर्त्यते मातृशरीरे चोपचीयते । बीजे च गर्भाशयस्थे तत् कल-

---

[1] ध्या नास्ति तस्यत

[2] सर्वस्य

लादिभावेनोपचीयमानं कर्मसापेक्षैर्भूतैः पाण्यादिभावमापद्यते[1] । यदि पुनः कर्मनिरपेक्षाणि भूतानि स्युः स्थाल्यादिगतमिवान्नं पच्येत ; नत्विदमस्ति । तस्मात्कर्मसापेक्षाणि भूतानीति ॥ ६५ ॥

[शरीरसृष्टावदृसापेक्षतासमर्थनम् ]

प्राप्तौ चानियमात् ॥ ६६ ॥

न च सर्वो दम्पत्योः सम्प्रयोगो गर्भाधानहेतुर्दृश्यते तदपि कर्मसापेक्षत्वे लिङ्गमिति ॥ ६६ ॥

अथ मन्यसे ; शरीरं सर्वात्मभिः सम्बध्यते । तत्र शरीरादिगतो न कश्चिन्नियमहेतुरस्ति । येन शरीरमेव तस्यात्मनो व्यवतिष्ठेत । न च पुरुषगतः कश्चिदतिशयो दृश्यते येन शरीरमेकस्यैवोपभोगसाधनं भवेत् । अस्ति च नियमः । तस्माद्वक्तव्यो नियमहेतुः । अतः आह—

शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म ॥ ६७ ॥

येनैव कर्मणा शरीरमुत्पद्यते तदेव शरीरं नियमयतीति । अकर्मनिमित्ते तु शरीरसर्गे यथोक्तदोष इति ॥ ६७ ॥

---

[1] अयमत्र विवेकः—"ऋतुकाले सम्प्रयोगात् एकरात्रोषितं कललं भवति । सप्तरात्रोषितं बुद्बुदं भवति" इति गर्भोपनिषत् ।

"प्रथमे मासि संक्लेदभूतो धातुर्विमूर्च्छितः ।
मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः ॥"

इति याज्ञवल्क्यसंहिता ।

एतेनाऽनियमः प्रत्युक्तः ॥ ६८ ॥

योऽयमकर्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यते अयं शरीरोत्पत्ति-निमित्तवत् संयोगोत्पत्तिनिमित्तं कर्मेत्यनेन प्रत्युक्तः। कः पुनरयं नियमः? यथैकस्यात्मनः शरीरं तथा सर्वात्मनामिति ।

उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः। शरीरस्य द्वे प्रकृती। व्यक्ताऽव्यक्ता चेति। तत्राव्यक्ताया कर्मसमाख्याताया प्रकृतेरुपभोगात् प्रक्षयः। प्रक्षीणे च कर्मणि विद्यमानानि भूतानि न शरीरमुत्पादयन्तीति उपपन्नोऽपवर्गः। कर्मनिरपेक्षेषु शरीरकारणेषु कस्य प्रक्षयान्मोक्षमाणा पुरुषाऽपवृज्येरन् भूतलक्षणाया प्रकृतेरनुच्छेदादिति ॥ ६८ ॥

[शरीरसृष्टौ साङ्ख्यनयनिरास ]

[1]पुनस्तत्प्रसङ्गोऽपवर्गे ॥ ६९ ॥

तददृष्टकारितमिति चेत्—अथ मन्यसे अदृष्टकारिता शरीरोत्पत्तिः। अदृष्टशब्देनाऽदृश्यमाना प्रकृतिरुच्यते। सा सर्गादौ पुरुषार्थेन हेतुना प्रवर्तते। प्रवृत्ता महदादिभावेन शरीरमुत्पादयति। उत्पन्ने तु शरीरे अदृष्टा दृश्यं पश्यति। दृश्यं च द्विविधं—विषया प्रकृतिपुरुषयोर्नानात्वं च। दृष्टे पुनस्तस्मिन्नानात्वे प्रधानं चरितार्थत्वान्न प्रवर्तते इति मन्यते। तत्र

---

[1] 'तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे' इति प्रचलितः मुद्रितः सूत्र पाठः। "शङ्कते—तददृष्टकारितमिति चेत् इति" इति तात्पर्यटीका। एतदनुरोधेन यथा मूलकोशं च "पुनस्तत्प्रसङ्गोऽपवर्गे" इत्येव मूल पाठ आदृतः।

लादिभावेनोपचीयमानं कर्मसापेक्षैर्भूतैः पाण्यादिभावमापद्यते[1] । यदि पुनः कर्मनिरपेक्षाणि भूतानि स्युः स्थाल्यादिगतमिवान्नं पच्येत ; नत्विदमस्ति । तस्मात्कर्मसापेक्षाणि भूतानीति ॥ ६५ ॥

[शरीरसृष्टावदृसापेक्षतासमर्थनम्]

प्राप्तौ चानियमात् ॥ ६६ ॥

न च सर्वो दम्पत्योः सम्प्रयोगो गर्भाधानहेतुर्दृश्यते तदपि कर्मसापेक्षत्वे लिङ्गमिति ॥ ६६ ॥

अथ मन्यसे ; शरीरं सर्वात्मभिः सम्बध्यते । तत्र शरीरादिगतो न कश्चिन्नियमहेतुरस्ति । येन शरीरमेव तस्यात्मनो व्यवतिष्ठेत । न च पुरुषगतः कश्चिदतिशयो दृश्यते येन शरीरमेकस्यैवोपभोगसाधनं भवेत् । अस्ति च नियमः । तस्माद्वक्तव्यो नियमहेतुः । अतः आह—

शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म ॥ ६७ ॥

येनैव कर्मणा शरीरमुत्पद्यते तदेव शरीरं नियमयतीति । अकर्मनिमित्ते तु शरीरसर्गे यथोक्तदोष इति ॥ ६७ ॥

---

[1] अयमत्र विवेकः—"ऋतुकाले सम्प्रयोगात् एकरात्रोषितं कललं भवति । सप्तरात्रोषितं बुद्बुदं भवति" इति गर्भोपनिषत् ।

"प्रथमे मासि संक्लेदभूतो धातुर्विमूर्च्छितः ।
मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः ॥"

इति याज्ञवल्क्यसंहिता ।

एतेनाऽनियमः प्रत्युक्तः ॥ ६८ ॥

योऽयमकर्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यते अयं शरीरोत्पत्ति-निमित्तवत् संयोगोत्पत्तिनिमित्तं कर्मेत्यनेन प्रत्युक्तः । कः पुनरयं नियमः? यथैकस्यात्मनः शरीरं तथा सर्वात्मनामिति ।

उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः । शरीरस्य द्वे प्रकृती । व्यक्ताऽव्यक्ता चेति । तत्राव्यक्ताया कर्मसमाख्याताया प्रकृतेरुपभोगात् प्रक्षयः । प्रक्षीणे च कर्मणि विद्यमानानि भूतानि न शरीरमुत्पादयन्तीति उपपन्नोऽपवर्गः । कर्मनिरपेक्षेषु शरीरकारणेषु कस्य प्रक्षयान्मोक्षमाणा पुरुषाऽपवृज्येरन् भूतलक्षणाया प्रकृतेरनुच्छेदादिति ॥ ६८ ॥

[शरीरसृष्टौ साङ्ख्यनयनिरास ]

पुनस्तत्प्रसङ्गोऽपवर्गे[1] ॥ ६९ ॥

तददृष्टकारितमिति चेत्—अथ मन्यसे अदृष्टकारिता शरीरोत्पत्तिः । अदृष्टशब्देनाऽदृश्यमाना प्रकृतिरुच्यते । सा सर्गादौ पुरुषार्थेन हेतुना प्रवर्तते । प्रवृत्ता महदादिभावेन शरीरमुत्पादयति । उत्पन्ने तु शरीरे अदृष्टा दृश्यं पश्यति । दृश्यं च द्विविधं—विषया प्रकृतिपुरुषयोर्नानात्वं च । दृष्टे पुनस्तस्मिन्नानात्वे प्रधानं चरितार्थत्वान्न प्रवर्तते इति मन्यते । तत्र

---

[1] 'तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे' इति प्रचलितः मुद्रितः सूत्र पाठः । "शङ्कते—तददृष्टकारितमिति चेत् इति" इति तात्पर्यटीका । एतदनुरोधेन यथा मूलकोशं च "पुनस्तत्प्रसङ्गोऽपवर्गे" इत्येव मूल पाठ आदृतः ।

पुनस्तत्प्रसङ्गोऽपवर्गे । अस्यार्थः—अदर्शननिमित्ता चेच्छरीरोत्पत्तिः यथा प्राक् नानात्वदर्शनात्प्रधानं पुरुषार्थं प्रवर्तते तथाऽपवर्गेऽपि प्रवर्तेत । न चैवमभ्युपगम्यते । तस्मान्नादर्शनं सर्गकारणं चरितार्थताविशेषो भविष्यतीति च न युक्तं चरितार्थानामपि पुनःपुनरारम्भदर्शनात् । आद्येन शरीरेण[1] रूपाद्युपलब्धेः । कृतत्वेऽपि चरितार्थं पुन[2]र्द्वितीयादिशरीरं ह्यारभ्यते । तेन गम्यते चरितार्थानामपि पुनर्भूतानां शरीरारम्भ इति ।

अपरे त्वदृष्टं परमाणुगुणं वर्णयन्ति तेषामपि पुनःपुनस्तत्प्रसङ्गोऽपवर्ग इत्युक्तदोषः समानः । परमाणुगुणस्याऽदृष्टस्य सद्भावादिति ॥ ६९ ॥

[आर्हतनयनिराकरणम् ]

अथ परमाणुगुणाऽदृष्टवादिनां मतमुपन्यस्यति—

**मनः कर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः ॥ ७० ॥**

परमाणवः स्वगुणाददृष्टात्संहन्यन्ते । संहताश्च द्व्यणुकादिक्रमेण शरीरमुत्पादयन्ति । तस्मिन्शरीरे मनोऽपि स्वगुणाददृष्टादुपसर्पति । उपसर्पणहेतोरदृष्टस्य नित्यत्वात्किं कृतमपसर्पणमिति ? कर्माशयक्षये कर्माशयादपसर्पणमिति युक्तं प्रायणम् । उभयवृत्तिर्मनोवृत्तिरदृष्टो भविष्यतीति न युक्तमेकस्य जीवनप्रायणहेतुत्वाऽनुपपत्तेः ॥ ७० ॥

[संयोगानुच्छेदे दोषाभिधानम् ]

संयोगाऽनुच्छेदे दोषमाह—

---

[1] ण शब्दाद्यु

[2] न र्विशया

[पूर्वोपलब्धविषयस्वप्नस्य न प्रत्याख्यानम्]

स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ ॥

यथा स्मृतिश्च सङ्कल्पश्च पूर्वोपलब्धविषयौ न तस्य प्रत्याख्यानाय कल्पेते । तथा स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय कल्पत इति ॥ ३४ ॥

[भ्रमज्ञानप्रतिरोधप्रकारनिरूपणम्]

[1]एवञ्च सति—

मिथ्योपलब्धिनाशस्तत्वज्ञानात् स्वप्नविषयाभिमान-
प्रणाशवत् प्रतिबोधे ॥ ३५ ॥

स्थाणौ पुरुषोऽयमित्यध्यवसायो मिथ्योपलब्धिः । तत्वज्ञानेन च मिथ्योपलब्धिः स निवर्तते । नार्थः स्थाणुपुरुषसामान्यलक्षणः । यथा [2]स्वप्नोपलब्धानां येऽध्यवसायाः ते जाग्रदवस्थोपलब्ध्या निवर्तन्ते । नार्थो विषयसामान्यलक्षण इति ॥ ३५ ॥

[मिथ्याबुद्धेर्निमित्तभावात्सत्वसमर्थनम्]

बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥

मिथ्याबुद्धेर्निमित्तमस्ति, किं पुनस्तत्? सामान्यदर्शनं विशेषदर्शनम् । अविद्यमानविशेषाध्यारोप इति । मिथ्यारूपं च मिथ्याबुद्धि

---

1 एवञ्चास्ति

2 प्रजाता × × × ते

च प्रतिपद्यमानेन तस्या निमित्तं प्रत्येतव्यम् । निमित्तं प्रतिपद्यमानेनार्थोऽभ्युपेय इति ॥ ३६ ॥

[मिथ्याबुद्धेर्द्वैविध्यान्न तद्दृष्टान्तेन ज्ञानस्यात्यन्तासद्विषयकत्वं इति निरूपणम्]

तत्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३७ ॥

तत्वं स्थाणुरिति प्रधानं पुरुष इति तत्व प्रधानयोरलोपे मिथ्याबुद्धिरुत्पद्यते सामान्य ग्रहणात् । स्थाणौ पुरुष इति पुरुषे स्थाणुरिति बुद्धिरुत्पद्यते यतो अतो मिथ्याबुद्धिः । तत्र समाने विषये मिथ्याबुद्धीनां समावेशः सामान्यग्रहणव्यवस्थानात् । यस्य तु निरात्मकं निरुपाख्यं सर्वं तस्यासमावेशः प्रसज्यते । गन्धादौ च प्रमेये गन्धादिबुद्धयो मिथ्याभिमतास्तत्वप्रधानयोः सामान्यग्रहणस्य चाभावात्तत्वबुद्धय एव भवन्ति । तस्मादयुक्तमेतत्—प्रमाणप्रमेयबुद्धयो मिथ्येति ॥ ३७ ॥

[तत्वज्ञानविवृद्धिप्रकरणम्]

दोषनिमित्तानां तत्वज्ञानादहङ्कारनिवृत्तिरित्युक्तं पुरस्तात् । अथ तत्वज्ञानं कथमुत्पद्यत इत्यपेक्षायां—

समाधिविशेषाभ्यासात् ॥ ३८ ॥

स तु प्रत्याहृतेभ्यो इन्द्रियेभ्यो मनसो धारकेण प्रयत्नेन धार्यमाणस्यात्मना संयोगस्तत्वबुभुत्साविशिष्टः समाधिविशेषः । सति हि तस्मिन् इन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते । तदभ्यासवशात्तु तत्वबुद्धिरुत्पद्यते ॥ ३८ ॥

[प्रबलैरिन्द्रियविषयैरपहृतमनसो धारणासम्भव इत्याशङ्का]

नार्थविशेषप्राबल्यात् ॥ ३९ ॥

नोपपद्यते समाधिविशेषाभ्यासः । अबुभुत्समानस्यापि बुध्युत्पत्तेः । यथा स्तनयित्नोः शब्दप्रभृतिष्विति ॥ ३९ ॥

[अनिच्छतोऽपि बुद्ध्युत्पत्तिनिरूपणम् ]

क्षुदादिभिः प्रवर्तनाच्च ॥ ४० ॥

क्षुत्पिपासाभ्यां व्याधिभिश्चानिच्छतोऽपि बुद्धय उत्पद्यन्ते । तस्मान्न युक्तः समाधिविशेषः ॥ ४० ॥

[पूर्वशरीराभ्यस्तसंस्कारविशेषस्येत्मा समाध्युपपत्तिः]

अस्त्वेतत्समाधिं[1] विहाय व्युत्थानं, व्युत्थाननिमित्तं समाधिप्रत्यनीकं च सति त्वेतस्मिन्—

पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ४१ ॥

पूर्वकृतः पूर्वशरीराभ्यस्तः समाधिविशेषः । तस्य फलं धर्मः तत्कृतः पुनः समाधिविशेष इति समाधिविशेषाच्च बाह्यविषयाभिभवः लौकिकस्यापि तावत्समाधिविशेषावस्थितस्य बाह्यविषयोपनिपाते बुद्धयो नोत्पद्यन्ते किं पुनर्योगिनः इति ॥ ४१ ॥

---

[1] धिं व्यु

[प्रत्यनीकपरिहारोपायनिरूपणम् ]

अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४२ ॥

अपवर्गेऽप्येवं प्रसङ्गः ॥ ४३ ॥

बाह्यविषयोपनिपाते अर्थज्ञानानि प्रादुर्भवन्ति, अपवर्गेप्येवं प्रसङ्गः । युक्तश्चापवर्गे बाह्यविषयोपनिपातो विद्यत इति बुद्ध्युत्पादप्रसङ्गः[1] ॥ ४२–४३ ॥

[शरीरे सत्येव बाह्यविषया ज्ञानकरणं भवन्ति नान्यथेतिनिरूपणम् ]

न निष्पन्नावश्यम्भावित्वात् ॥ ४४ ॥

कर्मवशान्निष्पन्ने शरीरे चेष्टेन्द्रियार्थाश्रये निमित्तभावादवश्यं भावी बुद्धीनामुत्पादः नान्यथेति ॥ ४४ ॥

[बुद्धिकारणाभावादपवर्गे बुद्ध्यभावः]

तदभावश्चापवर्गे ॥ ४५ ॥

तस्य शरीरादिकारणस्याभावोऽपवर्गः । तस्मात्सर्वदुःखविमोक्षोऽपवर्गः । यस्मात्सर्वं[2] दुःखबीजं च विच्छिद्यते, तस्मात्सर्वेण दुःखेन विमुक्तिरपवर्ग इति ॥ ४५ ॥

---

[1] ङ्गो × ×



[2] वं × × × × × × × × त

[यमनियमाभ्यां आत्मनः संस्कारः अपवर्गसाधनम् ]

**तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्म विध्युपायैः ॥ ४६ ॥**

तस्यापवर्गस्याधिगमाय [1]यमनियमाभ्यां आत्मसंस्कारः कर्तव्यः । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः[2] । शौचसन्तोषतपःस्वाध्याय-महेश्वरप्रणिधानानि[3] नियमाः । आत्मसंस्कारः पुनरधर्महानं धर्मोपचयश्च । योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः । स पुनः प्राणायामः प्रत्याहारो ध्यानं धारणेति इन्द्रियविषयेषु च प्रसंख्यानाभ्यासो रागद्वेषविघातार्थः । उपायस्तु योगाचारविधानमिति ॥ ४६ ॥

[अपवर्गे साधनान्तरनिरूपणम् ]

**ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४७ ॥**

ज्ञानग्रहणाभ्यासा तद्विद्यैश्च सह संवादः ज्ञानग्रहणं शास्त्रग्रहणं तद्विद्यायत्नमुपायं बुद्धयन्त इति तैः सह संवादः प्रज्ञापरिपाकार्थम् इति ॥ ४७ ॥

---

[1] य × नि

[2]तथा चाह पतञ्जलिः—"अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहा यमाः" इति । "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" इति च ।

[3] धानानि

[अवज्ञायमानस्यात्रपि विद्यापालनार्थं जल्पवितण्डयोः आवश्यकत्व प्रतिपादनम् ]

विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य—

ताभ्यां विगृह्य कथनम् ॥ ५१ ॥

ताभ्यां जल्पवितण्डाभ्यामिति । विगृह्येति विजिगीषया न तत्वबुभुत्सयेति । विद्यापालनार्थं चैतत्कर्तव्यम् । न लाभपूजाख्यात्यर्थमिति ।

प्रवृत्तिदोषसम्बन्धः प्रेत्यभावः प्रपञ्चितः ।
फलं दुःखं विमुक्तिश्च चतुर्थे परिकीर्तिताः ॥

इति न्यायसूत्रविवरणे चतुर्थाध्यायस्य द्वितीयमाह्निकम् ।

समासश्चायमध्यायः ।

## अथ न्यायसूत्रविवरणे पञ्चमेऽध्याये प्रथममाह्निकम्

[ सत्प्रतिपक्षदेशनाभासप्रकरणम् ]

[1]साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति संक्षेपेणोक्तं तद्विस्तरेण विभजते । यद्यपि जातिनिग्रहस्थानसामान्यलक्षणानन्तरं प्रथम एवाध्याये युक्तो विशेषो लक्षयितुम् । तथाप्येषां [2]बहुतरत्वात् प्रमेयपरीक्षाविलम्बो मा भूदिति अपेक्षिता वा शिष्यैः प्रमेयपरीक्षा । सा च संशयादिपरीक्षां विना न शक्या कर्तुमिति तत्परीक्षा कृता । तस्माच्छिष्यानुरोधेन मुनिः संशयादिपरीक्षापूर्विकां प्रमेयपरीक्षां तावत्प्रवर्तयाम्बभूव । तदनन्तरमवशिष्टं पञ्चमाध्याये वर्तयति—

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्था-

---

[1] प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्च । इदानीमेतदध्यायप्रतिपाद्यमाह—साधर्म्येति ।

[2] चतुर्विंशति जातयः । प्रयोगसार्थक्यं च प्रत्यपादि वार्तिककृता । यदा प्रतिवादी वादिना प्रयुक्तं स्थापनाहेतुं साध्विति मन्यते लाभपूजाख्यातिकामस्तु जातिं प्रयुङ्क्ते—कदाचिदयं जात्युत्तरेणाकुलीकृतो नोत्तरं प्रतिपद्यते उत्तराप्रतिपत्त्या च निगृह्यते ततश्च मे विजय एव स्यात् । अनभिधाने च जातेः मम स्यात्पराजयः । तस्माद्दूरमुत्पादनं सन्देहस्येति युक्त एव जातेः प्रयोगः । विस्तरस्तत्तत्रात्रैवानुसन्धेयः ।

पत्तिविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्य-
कार्यसमाः ॥ १ ॥

काः खल्विमा जातयः? स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिप्रतिषेध-हेतवः। तत्र जातिर्नाम स्थापनाहेतौ प्रयुक्ते यः प्रतिषेधसमर्थो हेतुः। जातेः प्रयोगप्रतिषेधात् असदुत्तरत्वाच्चारम्भो न युक्तः। छलजातिनिग्रहस्थानानां [1]स्ववाक्ये परिवर्जनमिति हि प्रतिषिद्धा जातिरिति अनारम्भप्रयोजकस्योक्तत्वात् उक्तं जातेरारम्भप्रयो[2]जनं स्वयं च सुकरः प्रयोगः। यदा तु वादी परस्य साधनं साध्विति मन्यते लाभपूजाख्यातिकामश्च भवति तदा जातिं प्रयुङ्क्ते। कदाचिदयं जात्युत्तरेणाकुलीकृतबुद्धिरुत्तरं न प्रतिपद्यते तदा निगृह्येत। वादिनश्चैकान्तजयः। अत एकान्तपराज[3]याद्वरं सन्देह इति युक्तो जातेः प्रयोग इति। साधर्म्यमेव समं वैधर्म्यमेव समं इति समार्थः प्रयोगो द्रष्टव्य इति ॥ १ ॥

[ साधर्म्यसमवैधर्म्यसमजात्योर्लक्षणनिरूपणम् ]

लक्षणं तु—

साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः
साधर्म्यवैधर्म्यसमौ ॥ २ ॥

साधर्म्येणोपसंहारे तद्विपरीतसाधर्म्येण प्रत्यवस्थानं, वैधर्म्येणोपसंहारे

---

[1] स्वावोक्ये

[2] जकं

[3] य द्वारं

तद्विपरीतसाधर्म्येण प्रत्यवस्थानं वा साधर्म्यसमः। अनित्यः शब्द उत्पत्तिधर्मकत्वात् उत्पत्तिधर्मकं [1]कुम्भाद्यनित्यं दृष्टमिति। अत्र यद्यनित्यघटसाधर्म्यादनित्यः, नित्येनाप्याकाशेनास्य साधर्म्यममूर्तत्वमस्तीति नित्यः प्राप्त इति। तस्मिन्नेव हेतौ आकाशवैधर्म्यादित्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः शब्दः, साधर्म्यमप्या[2]काशेनास्त्यमूर्तत्वमित्यतो नित्यः प्राप्त इति। एवं वैधर्म्येणोक्ते हेतौ तद्वैधर्म्येण प्रत्यवस्थानं साधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः। तस्मिन्नेव हेतावाकाशवैधर्म्यादित्युक्ते, यदि नित्याकाशवैधर्म्यादनित्यः अनित्येनास्य घटेन वैधर्म्यममूर्तत्वं, अतो नित्यः प्राप्त इति। तस्मिन्नेव हेतौ घटसाधर्म्यादिति कृते यद्य नित्य[3]घटसाधर्म्यादनित्यः वैधर्म्यमप्यमूर्तत्वमतो नित्यः प्राप्त इति ॥ २ ॥

[साधर्म्यवैधर्म्यसमयोर्जात्युत्तरत्वे हेत्वभिधानम्]

अनयोरुत्तरं—

[4]गोत्वादेर्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥

[5]गवाश्वसाधर्म्ये सत्वादौ, समाने वैधर्म्ये [6]चैकशफत्वादौ साधर्म्या[7]त्

---

[1] कुवरा

[2] कानस्य

[3] त्य × × सा

[4] साधर्म्यवैधर्म्यसमयोरसदुत्तरत्वे हेतुमाह — गोत्वदिति।

[5] गोरिवा

[6] कशेष दौ

[7] त् × × × × × भ

सत्वाद्गौरश्वो भवति। न वैधर्म्यादे[1]कशफत्वादेरगौर्गौर्भवति। किं कारणं? एकस्यानन्वयादेकस्यचाव्यावृत्तेः। यदन्वयव्यतिरेकिसाधर्म्यं तस्मात्तद्धर्मव्यवस्था गोत्वं च तथा, तस्माद्गोत्वादेव जातिविशेषात् गौः सिद्ध्यति। तथेहाप्यमूर्तत्वमुभयव्यतिरेक्युभयान्वयि च तस्मान्नित्यत्व-मनित्यत्वं वा न शक्यं प्रतिपत्तुम्। अपि त्वन्वयव्यतिरेकसम्पन्नादुत्पत्ति-धर्मकत्वादनित्यत्वमिति। अतो यद्ब्रवीपि विशेषहेत्वभावादिति अयं विशेष इति ॥ ३ ॥

[साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिजातिषट्कप्रकरणम्]

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्ष-
वर्णावर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥

अविद्यमानधर्माध्यारोप उत्कर्षः। विद्यमानधर्मापचयोऽपकर्षः। वर्ण्यः साध्यः। अवर्ण्यः असाध्यः। [2]विकल्पो विशेषः। एतेषां धर्माणामुद्भावनार्थाः प्रयोगाः उत्कर्षसमाद्या जातयः। साध्यसाधनधर्म-योस्तुल्यतया प्रत्यवस्थानं साध्यसमः। यथा तस्मिन्नेव हेतौ घटसाधर्म्या-दिति कृते यदि यथा घटस्तथा शब्द इति तर्हि घटो रूपादिमान् शब्दोऽ-प्येवं प्रसक्त इति उत्कर्षसमः। दृष्टान्तधर्मं साध्ये समारोपयत् उत्कर्ष-समः। शब्दोऽरूप इति घटोऽप्येवं प्रसक्त इति अत्र साध्ये धर्माभावं दृष्टान्तात् समारोपयति यः सोऽपकर्षसमः। घटोऽनित्य इत्यपवर्ण्यः। शब्दोऽप्येवं शब्दो वावर्ण्य इति घटोऽप्येवमिति वर्ण्यावर्ण्यसमौ। सत्येतस्मिन्

---

[1] दे शा श्वो

[2] विक्लवो

उत्पत्तिधर्मकत्वे विभागजशब्दः न विभागजो घटः विभागजाविभागज-विकल्पे च नित्यानित्यविकल्प इति विकल्पसमः। घटो वा अनित्य इत्यत्र को हेतुरयमपि साध्यवत्प्रज्ञापयितव्य इति उभय[1]साध्यवत्प्रत्यवस्थानात्साध्यसमः ॥ ४ ॥

[षण्णामुक्तानां जातीनामसदुत्तरत्वे हेत्वभिधानम्]

एतेषामुत्तरं—

किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥

न ब्रूमो यावन्तो घटधर्मास्ते घट[2] इव शब्दे भवन्तीति, अपि तु यस्य साधको धर्मो उपपद्यते स तत्साधनं तत्रोपसंह्रियते। अशेषधर्मोपसंहारे तु यथा तथैत्येव न स्यात्, स एवासाविति स्यात् तथेहापीत्ययमदोषः।

यत्पुनरेतत्—विभागजाविभागजविकल्पवन्नित्यानित्यविकल्प इति। यथोत्पत्तिधर्मकत्वमन्वयव्यतिरेकि नैवं विभागजत्वम्। न हि किञ्चिद्विभागाज्जायमानं यथोक्तविशेषणं नित्यमनित्यं वा दृष्टमित्येतदनुत्तरम् ॥ ५ ॥

[दृष्टान्तस्य साध्यसमत्वाभावकथनम्]

साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

दृष्टान्तः साध्य इति ब्रुवता न दृष्टान्तविलक्षणं व्यज्ञायि। दृष्टान्तो

[1] ध्यतप्र

[2] दृ. प.

हि नाम बुद्धिसाम्यविषयः । एवं साध्यातिदेशात् दृष्टान्ते उपपद्यमाने साध्यत्वमनुपपन्नमिति ॥ ६ ॥

[ प्राप्तिसमाप्राप्तिसमजातिद्वयलक्षणनिरूपणम् ]

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वादप्राप्त्याऽ-
साधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥

तस्मिन्नेव हेतौ घटादिसाधर्म्यादिति कृते यदि तावदयं हेतुः साध्यं प्राप्नोति प्राप्त्याऽऽविशिष्टः । कोऽविशेषार्थः ? उभयोर्विद्यमानता नाविद्यमानः सम्प्राप्यत इति हेतोः साधनार्थो हीयते । अथ न प्राप्नोति ; अप्राप्तेरविशिष्टत्वादहेतुर्भवति । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः । अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः ॥ ७ ॥

[ जातिद्वयस्योक्तस्य समाधानाभिधानम् ]

अनयोरुत्तरं—

घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥ ८ ॥

मृत्पिण्डप्राप्तदण्डादीनां नाविशेषः । न च साध्यसाधनभावनिवृत्तिः । न हि मृत्पिण्डप्राप्तोदण्डः साधनत्वं जहाति, नापीतरत् साध्यत्वं जहाति ॥ ८ ॥

[ प्रसङ्गसमप्रतिदृष्टान्तसमयोर्लक्षणकथनम् ]

दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन
प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥

यथाऽस्मिन्नेव हेतौ घटादिसाधर्म्यादितिकृते घट एव तावदनित्यः

इत्यत्र को हेतुः इति प्रसङ्गसमः। प्रतिदृष्टान्तेन प्रत्यवस्थानं [1]प्रतिदृष्टान्तसमः। यथा क्रियावानात्मा [2]क्रियाहेतुगुणयोगात् लोष्टवदित्युक्ते प्रतिदृष्टान्त उपादीयते, क्रियाहेतुगुणयुक्तमाका[3]शमक्रियं दृष्टमिति। कः पुनरस्याकाशस्य क्रियाहेतुर्गुणः। वायुना संयोगो वायुगतवेगाख्यसंस्कारापेक्षः वायुवनस्पतिसंयोगवदिति ॥ ९ ॥

[प्रसङ्गसमजातेः समाधानाभिधानम्]

अन्योरुत्तरं—

प्रदीपोपादानप्रसङ्गविनिवृत्तिवत् तद्विनिवृत्तिः ॥ १० ॥

इदं तावदयं पृष्टव्यः? के प्रदीपमुपाददते किमर्थं चैतदिति? दिदृक्षमाणा दृश्यदर्शनार्थमिति। अथ प्रदीपं दिदृक्षमाणेन दीपान्तरं दृश्यते प्रदीपः। अतः प्रदीपदर्शनार्थं प्रदीपान्तरोपादानं व्यर्थमिति। अथ दृष्टान्तः किमर्थमुच्यत इति? अप्रज्ञातस्य ज्ञापनार्थमिति। अथ दृष्टान्ते कारणापदेशः किमर्थश्चोद्यते? यदि प्रज्ञापनार्थं, प्रज्ञातो दृष्टान्तः। स खलु लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति। तत्प्रज्ञापनार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम् ॥ १० ॥

[प्रतिदृष्टान्तसमजातेः समाधाननिरूपणम्]

---

[1] प्रति × × × × म

[2] क्रियागुण

[3] श क्रियं

प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥

प्रतिदृष्टान्तं ब्रुवता न विशेषहेतुरुच्यते । अनेन कारणेन प्रतिदृष्टान्तः साधकः, न दृष्टान्त इति । एवं प्रतिदृष्टान्तस्य हेतुत्वे नाहेतुर्दृष्टान्त इत्युपपद्यते । स च कथं हेतुर्न स्यात्? यद्यप्रतिषिद्धः साधकः स्यादिति ॥ ११ ॥

[ अनुत्पत्तिसमजातिनिरूपणम् ]

[1]प्रागनुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥

अनित्यः शब्दः उत्पत्तिधर्मकत्वादित्युक्ते—कश्चित् ब्रूयात्, प्रागुत्पत्तेः शब्दस्योत्पत्तिधर्मकत्वमनित्यत्वकारणं नास्ति ; तदभावाच्छब्दोऽनुत्पत्तिधर्मकः। ततश्च नित्य इत्यनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ॥ १२ ॥

[अनुत्पत्तिसमजातेः समाधानकथनम् ]

अस्योत्तरम्—

तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥

उत्पन्नः खल्वयं शब्द इति भवति । प्रागुत्पत्तेः शब्द एव नास्ति । उत्पन्नस्य शब्दभावाच्छब्दस्य सतः प्रयत्नानन्तरीयकत्वमनित्यत्वकारणमुपपद्यते । कारणोपपत्तेरयुक्तोऽयं दोषः—प्रागुत्पत्तेः कारणाभावादिति ॥ १३ ॥

---

[1] यस्य कस्यचित्साधनाङ्गस्य 'उत्पत्तेः प्राक् कारणस्य हेतोः अभावात् प्रत्यवस्थानमनुत्पत्तिसम इत्यर्थः ।

[संशयसमजातिलक्षणाभिधानम्]

सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः ॥ १४ ॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते—सति प्रयत्नानन्तरीयकत्वे[1] अस्त्येवास्य नित्येन सामान्येन साम्यमैन्द्रियकत्वं, अस्ति च दृष्टान्ते न घटेनानित्येन । एवं नित्यानित्यसाधर्म्यादनिवृत्तः संशय इति ॥ १४ ॥

[संशयसमजातिप्रत्याख्यानावतरणम्]

अस्योत्तरम्—

साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयोऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥

साधर्म्यात् साधर्म्यदर्शनात् संशयः । वैधर्म्याद्विशेषदर्शनान्न संशयः । उभयथा तु संशये सामान्यविशेषदर्शने सति संशयेऽत्यन्तसंशयप्रसङ्गो नित्यं सामान्यं संशयं करोतीति तु न प्रतिपद्यामहे सति सामान्ये विशेषदर्शनाद्व्यावृत्तेरिति ॥ १५ ॥

[प्रकरणसमातिलक्षणाभिधानम्]

उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥

उभयेन नित्येनानित्येन च साधर्म्यात् पक्षप्रतिपक्षयोः प्रवृत्तिः

---

[1] त्वे × × × नि

प्रक्रिया। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्येकः पक्षः। द्वितीयश्च नित्यसाधर्म्यात्। एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानो न प्रकरणमतिवर्तते।

समानं चैतन्नित्यसाधर्म्येणोच्यमाने हेतौ। तदिदं प्रकरणानतिवृत्त्या प्रत्यवस्थानं प्रकरणसमः। समानं चैतद्वैधर्म्येऽपि। उभयवैधर्म्यात्प्रक्रियासिद्धेः प्रकरणसम इति ॥ १६ ॥

[प्रकरणसमजातेः समाधाननिरूपणम्]

अस्योत्तरम्—

प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ १७ ॥

उभयसाधर्म्यात्प्रक्रियासिद्धिं ब्रुवता प्रतिपक्षात्प्रक्रियासिद्धिरुक्ता भवति। [1]यत्तुभयसाधर्म्यं तत्र एकतरः प्रतिपक्षः, एवं सति उपपन्नः प्रतिपक्षो भवति। ततोऽनुपपन्नः प्रतिषेधः। यदि प्रतिपक्षोपपत्तिः प्रतिषेधो नोपपद्यते। अथ प्रतिषेधोपपत्तिः प्रतिपक्षो नोपपद्यते। प्रतिपक्षोपपत्तिः प्रतिषेधोपपत्तिश्चेति विप्रतिषिद्धमेतत्। तत्त्वानवधारणादेव प्रक्रियासिद्धेः विपर्यये प्रकरणावसानात् तत्त्वावधारणे ह्यवसितं प्रकरणं भवतीति ॥ १७ ॥

[अहेतुसमप्रकरणम्]

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥

हेतुः साधनम्। तत्साध्यात्पूर्वं पश्चात् सह वा भवेत्। यदि

---

[1] य × × × सा

पूर्वं साधनं, असति साध्ये [1]कस्य साधनम्? यदि पश्चात्, असति साधने कस्येदं साध्यम्? अथ युगपत्साध्यसाधने द्वयोर्विद्यमानयोः किं [2]कस्य साधनं किं कस्य साध्यमिति। हेतुरहेतुना न विशिष्यते। अहेतुना साम्यत्प्रत्यवस्थानमहेतुसमः ॥ १८ ॥

[अहेतुसमजातेः प्रत्याख्यानावतरणम्]

अस्योत्तरम्—

न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥

न त्रैकाल्यासिद्धिः। कुतः? [3]हेतुतः साध्यसिद्धेः। निर्वर्तनीयस्य निवृत्तिर्विज्ञेयस्य विज्ञानमुभय कारणतो दृश्यते। सोऽयं महान् प्रत्यक्षविषय उदाहरणमिति। यत्तूक्तमसति साध्ये कस्य साधनमिति यच्च निवर्त्यते, यच्च विज्ञाप्यते तस्येति ॥ १९ ॥

[विप्रतिपत्तौ प्रतिबन्दिनिरूपणम्]

प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥

प्रतिषेधात्पूर्वं पश्चात् युगपद्वा प्रतिषेधः नोपपद्यते। प्रतिषेधानुपपत्तेः स्थापनाहेतुः सिद्ध इति ॥ २० ॥

[अर्थापत्तिसमजातिलक्षणाभिधानम्]

---

[1] तस्य

[2] तस्य

[3] तः × × ×

अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवदिति स्थापिते पक्षे अर्थापत्त्या प्रतिपक्षं साधयतोऽर्थापत्तिसमः । यद्यनित्यसाधर्म्यादनित्यः शब्द इत्यर्थादापद्यते, नित्यसाधर्म्यात् अस्पर्शत्वन्नित्य इति ॥ २१ ॥

[अर्थापत्तिसमजातेः समाधानाभिधानम्]

अस्योत्तरं—

अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥

अनुपपाद्य सामर्थ्यमनुक्तमर्थादापद्यते इति ब्रुवतः पक्षहानेरुपपत्तिरनुक्तत्वात् । [1]अनित्यपक्षसिद्धावर्थादापन्नं नित्यपक्षस्य हानिरिति । अनैकान्तिकत्वाच्चार्थापत्तेः । उभयपक्षसमा चेयमर्थापत्तिः । यदि नित्यधार्म्यादस्पर्शत्वादाकाशवच्च नित्यः शब्दोऽर्थादापन्नं—अनित्यसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्य इति ॥ २२ ॥

[अविशेषसमप्रकरणम्]

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥

एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेषे उभयोरनित्यत्वे सर्वस्य विशेषः प्रसज्यते । सद्भावस्यैकधर्मोपपत्तेः सर्वाविशेषप्रसङ्गात् प्रत्यवस्थानमविशेषसमः ॥ २३ ॥

---

[1] अनुक्तप

[अविशेषसमजातेः प्रत्याख्यानाभिधानम् ]

अस्योत्तरम्—

क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः ॥ २४ ॥

यथा साध्यदृष्टान्तयोरेकस्य धर्मस्य प्रयत्नानन्तरीयकत्वस्योपपत्तावनित्यत्वं धर्मान्तरमविशेषो एवं न सर्वभावानां सद्भावोपपत्तिनिमित्तं धर्मान्तरमस्ति । [1]येनाविशेषः स्यात् ॥ २४ ॥

[ उपपत्तिसमलक्षणनिरूपणम् ]

उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥

उभयस्य नित्यत्वस्यानित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमः ॥ २५ ॥

[उक्तस्य प्रत्याख्यानाभिधानम् ]

अस्योत्तरम्—

उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥

उभयकारणोपपत्तेरिति ब्रुवता अभ्यनुज्ञातं अनित्यत्वकारणमिति । तथा च विरोधादुत्तरपक्षोत्थानं न युक्तम् ॥ २६ ॥

[उपलब्धिसमजातिलक्षणनिरूपणम् ]

निर्दिष्टकारणाभावेप्युपलम्भात् उपलब्धिसमः ॥ २७ ॥

निर्दिष्टस्य प्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावे वायुनोदनात्

---

[1] लि यद

वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते । निर्दिष्टस्य साधनस्याभावेपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः ॥ २७ ॥

[उपलब्धिसमजातेः प्रत्यादेशावतरणम्]

अस्योत्तरम्—

कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥

प्रयत्नानन्तरीयकत्वादिति ब्रुवता [1]कारणत उत्पत्तिरभिधीयते । न कार्यस्य कारणनियमः क्रियते इति ॥ २८ ॥

[अनुपलब्धिसमजातिलक्षणनिरूपणम्]

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥

[2][तेषामावरणादीनामनुपलब्धिर्नोपलभ्यते । अनुपलम्भान्नास्तीत्यभावोऽस्याः सिध्यति । अभावसिद्धौ हेत्वभावात्तद्विपरीतमस्तित्वमावरणादीनामवधार्यते । तद्विपरीतोपपत्तेर्यत्प्रतिज्ञातं न प्रागुच्चरणाद्विद्यमानस्य शब्दस्यानुपलब्धिरिति एतन्न सिद्ध्यति । सोऽयं हेतुरावरणाद्यनुपलब्धेरित्यावरणादिषु चावरणाद्यनुपलब्धौ च समयानुपलब्ध्या प्रत्यवस्थितोऽनुपलब्धिसमो भवति ।] ॥ २९ ॥

---

[1] प्रयत्नकारणात्

[2] [ ] एतच्चिह्नान्तर्गतो ग्रन्थः मूलकोशस्य त्रुटितत्वाद्यथामाध्यमायोजितः ।

[अनुपलब्धिसमजातेः प्रत्यादेशाभिधानम्]

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥

आवरणाद्यनुपलब्धिर्नास्ति, अनुपलम्भादित्ययमहेतुः। कुतः? अनुपलम्भात्मकत्वादनुपलब्धेः। उपलम्भाभावमात्रत्वादनुपलब्धेः। यद्विद्यते तदुपलब्धिविषयः। न विद्यते च यत् तदनुपलब्धेर्विषयः। सोऽयमावरणाद्यनुपलब्धेरनुपलम्भ उपलब्ध्यभावेऽनुपलब्धौ स्वविषये प्रवर्तमानो न स्वं विषयं प्रतिषेधति। अप्रतिषिद्धा चावरणाद्यनुपलब्धिर्हेतुत्वाय कल्पते। आवरणादीनि तु विद्यमानत्वादुपलब्धेर्विषयाः। यत्तानि नोपलभ्यन्ते तदुपलब्धेः स्वविषयप्रतिपादिकाया अभावादनुपलब्धेर्विषयो गम्यते—न सन्त्यावरणादीनि शब्दाग्रहणकारणानि—इति। अनुपलम्भादनुपलब्धिः सिद्ध्यति। विषयः स तस्येति[1] ॥ ३० ॥

ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥

अहेतुरिति वर्तते। शरीरिणां ज्ञानविकल्पानां भावाभावौ संवेदनीयौ। अस्ति मे संशयज्ञानं नास्ति मे इत्यादि। सेयमावरणाद्यनुपलब्धिरुपलब्ध्यभावः स्वसंवेद्यो नास्ति मे शब्दस्यावरणाद्युपलब्धिः इति नोपलभ्यन्ते शब्दस्याग्रहणकारणान्यावरणानि इति। तत्र यदुक्तं—तदनुपलब्धेरनुपलम्भादभावसिद्धिरिति—एतन्नोपपद्यते ॥ ३१ ॥

[अनित्यसमप्रकरणलक्षणम्]

---

[1] इतः परं सूत्रचतुष्टयव्याख्या नोपलभ्यते लेखकप्रमादात्। अतः यथाभाष्यमेव स ग्रन्थः आयोजितः।

**साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥**

अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतोऽस्ति घटेनानित्येन सर्वभावानां साधर्म्यमिति सर्वस्यानित्यत्वमनिष्टं सम्पद्यते। सोऽयमनित्यत्वेन प्रत्यवस्थानादनित्यसमः ॥ ३२ ॥

[प्रतिबन्द्या प्रत्याख्याननिरूपणम्]

अस्योत्तरम्—

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात् ॥ ३३ ॥**

प्रतिज्ञाद्यवयवयुक्तं वाक्यं पक्षनिवर्तकं प्रतिपक्षलक्षणं प्रतिषेधः। तस्य पक्षेन प्रतिषेध्येन साधर्म्यं प्रतिज्ञादियोगः। तद्यद्यनित्यसाधर्म्यादनित्यत्वस्यासिद्धिः साधर्म्यादसिद्धेः प्रतिषेधस्याप्यसिद्धिः प्रतिषेध्येन साधर्म्यादिति ॥ ३३ ॥

**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथा भावान्नाविशेषः ॥ ३४ ॥**

दृष्टान्ते यः खलु धर्मः साध्यसाधनभावेन प्रज्ञायते स हेतुत्वेनाभिधीयते। स उभयथा भवति—केनचित्समानः कुतश्चिद्विशिष्टः। सामान्यात्साधर्म्यं, विशेषाद्वैधर्म्यम्। एवं साधर्म्यविशेषो हेतुर्नाविशेषेण साधर्म्यमात्रं वैधर्म्यमात्रं वा। साधर्म्यमात्रं वैधर्म्यमात्रं चाश्रित्य भवानाह—साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसम इति—एतदयुक्तमिति। अविशेषसमप्रतिषेधे च यदुक्तं तदपि वेदितव्यम् ॥ ३४ ॥

[नित्यसमजातिलक्षणनिरूपणम्]

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥

अनित्यः शब्द इति प्रतिज्ञायते। तदनित्यत्वं शब्दे किं नित्यमनित्यं वेति?। यदि तावत् सर्वदा भवति धर्मस्य सर्वदा भावाद्धर्मिणोऽपि सर्वदा भाव इति नित्यः शब्दः। अथ न सर्वदा भवति तर्हि, अनित्यत्वस्याभावात् नित्यः शब्द इत्येवं नित्यत्वेन प्रत्यवस्थानान्नित्यसमः ॥ ३५ ॥

[नित्यसमजातेः प्रत्यादेशावतरणम्]

अस्योत्तरम्—

प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः। ३६ ॥

प्रतिषेध्ये शब्दे नित्यमनित्वस्यस्य भावादित्युच्यमाने अनुज्ञातं शब्दस्यानित्यत्वम्। अनित्यत्वोपपत्तेश्च नानित्यः शब्द इति प्रतिषेधो नोपपद्यते। अथ नानुज्ञायते नित्यमनित्यत्वस्य भावात्—इति हेतुर्न भवतीति हेत्वभावात्प्रतिषेधानुपपत्तिरिति।

नित्यानित्यत्वविरोधाच्च। नित्यत्वमनित्यत्वं चैकस्य धर्मिणो धर्माविति विरुध्येते न सम्भवतः। तत्र यदुक्तं—नित्यमनित्यत्वस्य भावाद् नित्य एव—तदवर्तमानार्थमुक्तमिति ॥ ३६ ॥

[कार्यसमजातिलक्षणकथनम्]

प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ ३७ ॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते जातिः कार्यसमा

प्रयुज्यते । प्रयत्नकार्यमनेकधा दृष्टमिति किञ्चित्प्रयत्नानन्तरं व्यज्यते किञ्चित्प्रयत्नानन्तरमुत्पद्यते । प्रयत्नानन्तरमुपलब्धेर्हेतुत्वाध्यारोपेणानैकान्तिकतादर्शनात् कार्यसमः ॥ ३७ ॥

[कार्यसमजातेः प्रत्यादेशनिरूपणम्]

कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥

सति कार्यान्यत्वे अनुपलब्धिकारणोपपत्तेः प्रयत्नस्याहेतुत्वं शब्दस्याभिव्यक्तौ । यत्र प्रयत्नानन्तरमभिव्यक्तिस्तत्रानुपलब्धिकारण व्यवधानमुपपद्यते । व्यवधानापोहाच्च प्रयत्नानन्तरभाविनोऽर्थस्योपलब्धिलक्षणाभिव्यक्तिर्भवतीति । न तु शब्दस्यानुपलब्धिकारणं किञ्चिदस्ति यस्य प्रयत्नानन्तरमपोहात् शब्दस्योपलब्धिलक्षणाभिव्यक्तिर्भवतीति । तस्मादुत्पद्यते शब्दो नाभिव्यज्यत इति ॥ ३८ ॥

[षट्पक्षीरूपकथाभासोपन्यासः]

एवं तावत् जातयो व्यवस्थिताः । इदानीं षट्पक्षीमुपन्यस्यन्निदमाह—

[1]प्रतिषेधेऽपि समानो दोषः ॥ ३९ ॥

प्रथमपक्षवादी उत्तरं ब्रुवत्यनेन सूत्रेण यदि प्रयत्नानन्तरीयकत्वं व्यङ्ग्येऽपि दृष्टमिति अनैकान्तिकत्वात् अहेतुः तर्हि प्रतिषेधोऽप्यनैकान्तिकः कस्यचिदप्रतिषेधात् कस्यचित्प्रतिषेधादिति ।

अथवा शब्दस्यानित्यत्वपक्षे प्रयत्नानन्तरमुत्पादो नाभिव्यक्तिरिति

[1] 'प्रतिषेधे विप्रतिषेधेऽपि समानो दोष' इति क्वचिन्मुद्रितः पाठः ।

विशेषहेत्वभावः। नित्यत्वपक्षेऽपि प्रयत्नानन्तरमभिव्यक्तिर्नोत्पाद इति[1] विशेषहेत्वभावः। सोऽयमुभयपक्षसमो हेत्वभाव इति उभयमप्यनैकान्तिकमिति ॥ ३९ ॥

सर्वत्रैवम् ॥ ४० ॥

सर्वासु जातिष्वेका प्रयुक्तिरिति सूत्रार्थः ॥ ४० ॥

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

योऽयं प्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वमापाद्यते, सोऽयं प्रतिषेधस्य प्रतिषेधेऽपि समानः। तत्रानित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति साधनवादिनः स्थापना प्रथमः पक्षः। 'प्रयत्नकार्यानेकत्वात् कार्यसम' इति दूषणवादिनः प्रतिषे हेतुना द्वितीयः पक्षः। तृतीयः पक्षो विप्रतिषेधः। एतस्मिन् विप्रतिषेधे समानमनैकान्तिकत्वं दोष इति चतुर्थः पक्षः ॥ ४१ ॥

प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥

प्रतिषेधं द्वितीयपक्षं सदोषमभ्युपेत्य तदुद्धारमनुक्त्वाऽनुज्ञाय प्रतिषेधविप्रतिषेधे तृतीयपक्षे समानमनैकान्तिकत्वमिति समानं दूषणं प्रसजतो दूषणवादिनो मतानुज्ञा प्रसज्यत इति पञ्चमः पक्षः ॥ ४२ ॥

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषा-

---

[1] ति × × × × × × × ×

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः ॥ ४३ ॥

स्थापनापक्षे प्रयत्नकार्यानेकत्वादिति दोषः स्थापनाहेतुवादिनः स्वपक्ष-लक्षणो भवति। कस्मात्? स्वपक्षसमुत्थत्वात्। स्वपक्षलक्षणं दोषम-पेक्षमाणोऽनुद्धृत्यानुज्ञाय प्रतिषेधेऽपि समानो दोष इत्युपपाद्यमानं दोषं परपक्ष उपसंहरति। इत्थं वाऽनैकान्तिकः प्रतिषेध इति हेतुं निर्दिशति। अत्र स्वपक्षलक्षणापेक्षयोपपद्यमान दोषोपसंहारे हेतुनिर्देशे च सत्यनेन परपक्षदोषोऽ-भ्युपगतो भवति। कथं कृत्वा? यः परेण प्रयत्नकार्यानेकत्वादित्यनेना-नैकान्तिक दोष उक्तः तमनुद्धृत्य प्रतिषेधेऽपि समानो दोष इत्याह। एवं स्थापनां सदोषामभ्युपेत्य प्रतिषेधविप्रतिषेधेऽपि समानं दोषं प्रसजतः परपक्षा-भ्युपगमात् समानो दोषः भवति। यथा परस्य प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधेऽपि तथास्यापि स्थापनां सदोषामभ्युपेत्य प्रतिषेधे समानं दोषं प्रसजतो मतानुज्ञा प्रसज्यत इति।

स खलु षष्ठः पक्षः। तत्र स्थापना हेतुवादिनः प्रथमतृतीयपञ्चम-पक्षाः। प्रतिषेधहेतुवादिनो द्वितीयचतुर्थषष्ठपक्षाः। तेषां साध्वसाधु-तायां मीमांस्यमानायाँ चतुर्थषष्ठयोरर्थाऽविशेषात् पुनरुक्तदोषप्रसङ्गः। चतुर्थपक्षे समानदोषत्वं परस्योच्यते प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोष इति। षष्ठेऽपि परपक्षदोषाभ्युपगमात् समानो दोष इति समानदोषत्वमेवोच्यते नार्थविशेषः कश्चिदस्तीति। तत्र पञ्चमषष्ठयोः पुनरुक्तदोषः। तृतीय चतुर्थयोर्मतानुज्ञा। प्रथमद्वितीययोर्विशेषहेत्वभाव इति षट्पक्ष्यामुभयोर-

सिद्धिः अयुक्तत्वादित्वात् । यदा त्वनुपलब्धिकारणाभावे सति प्रयत्नानन्तरमुपलब्धेरिति विशेषहेतुरुच्यते तदा न षट्पक्षी प्रवर्तत इति । एतास्तु जातयो न तत्त्वविवेकमुपकुर्वन्तीति भेदमात्रमासामुक्तमिति ॥ ४३ ॥

इति न्यायसूत्रविवरणे पञ्चमेऽध्याये प्रथममाह्निकम् ।

## अथ न्यायसूत्रविवरणे पञ्चमेऽध्याये द्वितीयमाह्निकम्

विप्रतिपत्त्यविप्रतिपत्त्योर्निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तम्। तदिदानीं विभज्यते—निग्रहस्थानानि पराजय[1]वस्तूनि अपराधाधिकरणानि द्वाविंशतिः। तेषां विभागः—

[निग्रहस्थानविभागः]

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासः
हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थकमपार्थकमप्राप्तकालं
न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा
विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयो-
ज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च
निग्रहस्थानानि ॥ १ ॥

तानीमानि द्वाविंशतिधा विभज्य[2] लक्ष्यन्ते ॥ १ ॥

[ प्रतिज्ञाहानिलक्षणनिरूपणम् ]

प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥

प्रतिदृष्टान्तस्य यो धर्मः तं यदा स्वदृष्टान्तेऽभ्यनुजानाति तदा निगृहीतो वेदितव्यः। यथाऽनित्यः शब्दः ऐन्द्रियकत्वात् घटवदित्येकः, सामान्यमैन्द्रियकं दृष्टं नित्यं, कस्मान्न तथा शब्द इति द्वितीयः। यदि सामान्यमैन्द्रियकं नित्यं घटोऽप्येवमस्त्विति तृतीयः पक्षः। अनेन किल

1 जयाधि

2 ज्यन्ते

प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽनुजानाति ततश्च दृष्टान्तं जहन्निगमनान्तमेव पक्षं जहातीति प्रतिज्ञाहानिरित्युच्यते ।

यद्वा दृष्टश्चासौ अन्ते व्यवस्थितश्चेति दृष्टान्तव्युत्पत्त्या स्वदृष्टान्तशब्देन स्वपक्ष एवाभिधीयते । प्रतिदृष्टान्तशब्देन प्रतिपक्षः एतदुक्तं भवति प्रतिपक्षस्य यो धर्मः तं स्वपक्षेऽभ्यनुजानाति । यथा सामान्यमैन्द्रियकं दृष्टमिति शब्दोऽप्येवमस्त्विति एषा प्रतिज्ञाहानिः ॥ २ ॥

[प्रतिज्ञान्तरनिग्रहस्थानलक्षणम्]

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पादिति दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्य-योगे धर्मभेदात्सामान्यमैन्द्रियकं सर्वगतं, असर्वगतः शब्द इत्येतस्मात् धर्म-विकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम् । अत्र अनित्यः शब्द इति पूर्वा प्रतिज्ञा । असर्वगत इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरम् । तत्कथं निग्रहस्थानमिति ? न प्रतिज्ञायाः साधनं प्रतिज्ञान्तरम् । किन्तु हेतुदृष्टान्तौ साधनं प्रतिज्ञायाः । तदेतदसाधनोपादानमनर्थकमिति ॥ ३ ॥

[प्रतिज्ञाविरोधनिग्रहस्थानलक्षणम्]

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥

यत्र प्रतिज्ञा हेतुना विरुध्यते हेतुश्च प्रतिज्ञया स प्रतिज्ञाविरोधो नाम निग्रहस्थानम् । यथा गुणव्यतिरिक्तं द्रव्यं भेदेनाग्रहणादिति ॥ ४ ॥



[प्रतिज्ञासन्न्यासलक्षणनिरूपणम्]

पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः ॥ ५ ॥

अनित्यः शब्दः ऐन्द्रियकत्वादित्युक्ते परो वदेत् सामान्यमैन्द्रियकं न चानित्यमेवं शब्दोप्यैन्द्रियकः न चानित्य इति । एवं प्रतिषिद्धे पक्षे यदि ब्रूयात्, कः पुनराह अनित्यः शब्द इति । सोऽयं प्रतिज्ञातार्थनिह्नवः प्रतिज्ञासन्न्यास इति ॥ ५ ॥

[ हेत्वन्तरनिग्रहस्थाननिरूपणम् ]

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥

निदर्शनं—एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा । कस्माद्धेतोः? एकप्रकृतीनां विकाराणां परिमाणात् । मृत्पूर्वकादीनां शरावादीनां दृष्टं परिमाणम् । यावान् प्रकृते र्व्यूहो भवति, तावान्विकार इति । दृष्टं च प्रतिविकारं परिमाणम् । अस्ति चेदं परिमाणं प्रतिव्यक्तम् । तदेकप्रकृतीनां विकाराणां परिमाणात् पश्यामो व्यक्तमिदमेकप्रकृतीति ।

अस्य व्यभिचारेण प्रत्यवस्थानम्—नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति । एवं प्रत्यवस्थिते आह—एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात् । सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति ।

तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति । सति च हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते नेदं व्यक्तमेकप्रकृतिभवति । प्रकृत्यन्तरोपादानात् । अथ नोपादीयते, दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य साधकभावानुपपत्तेरानर्थक्याद्धेतोरनिवृत्तं निग्रहस्थानमिति ॥ ६ ॥

[ अर्थान्तररूपनिग्रहस्थानलक्षणाभिधानम् ]

प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ॥ ७ ॥

यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात्, नित्यः शब्दोऽस्पर्शत्वादिति हेतुः। हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदम्। पदं च नामाख्यातोपसर्गनिपाताः अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम। क्रियाकारकसमुदायः कारकसङ्घातविशिष्टक्रियाकालयोगाभिधाय्याख्यातम्। धात्वर्थमात्रं च कालाभिधानविशिष्टम्। प्रयोगेष्वर्थादभिद्यमानरूपाः निपाताः। उपसृज्यमाना क्रियावद्योतका उपसर्गा इत्येवमादि। तदर्थान्तरं वेदितव्यमिति ॥ ७ ॥

[निरर्थकनिग्रहस्थानलक्षणकथनम् ]

वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥

यथा नित्यः शब्दः कचटतपा जबगडदत्वात् झभञ्गडदशवदिति एवं प्रकारं निरर्थकम्। अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावात् वर्णा एव क्रमेण निर्दिश्यन्त इति ॥ ८ ॥

[ अविज्ञातार्थनिग्रहस्थानलक्षणम् ]

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातामविज्ञातार्थम् ॥ ९ ॥

परिषत्प्रतिवादिभ्यां त्रिरभिहितमपि न विज्ञायते। यथा क्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चरितमित्येवमादिना कारणेन तदविज्ञातमविज्ञातार्थम्। असामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति ॥ ९ ॥

[ अपार्थकनिग्रहस्थानलक्षणम् ]

पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ १० ॥

यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्ययोगो नास्ति इत्यसम्बन्धात् गृह्यते, तच्च समुदायार्थाभावादपार्थकम् । यथा दशदाडिमानि षडपूपाः । कुण्ड[1]मजिनमित्यादि ॥ १० ॥

[अप्राप्तकालनिग्रहस्थानलक्षणनिरूपणम ]

अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥

प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः । तत्रावयव-विपर्यासेन वचनमप्राप्तकाल[2]मसंबद्धार्थं निग्रहस्थानमिति ॥ ११ ॥

[न्यूननिग्रहस्थानलक्षणाभिधानम् ]

हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥

यस्मिन्[3] वाक्ये प्रतिज्ञादीनां अन्यतमोऽवयवः हीनो भवति, तद्वाक्यं हीनं वेदितव्यम् । साधनाभावे साध्यासिद्धिरिति निग्रहः ॥ १२ ॥

- [ अधिकनिग्रहस्थानलक्षणनिरूपणम् ]

हेतूदाहरणाधिकमधिकम् ॥ १३ ॥

---

[1] षडमणिन

[2] ल निग्रह

[3] न् × × प्र

एकेन कृतत्वादन्यतरस्यानर्थक्यमिति । तदेतन्नियमाभ्युपगमे वेदितव्यमिति ॥ १३ ॥

[ पुनरुक्तनिग्रहस्थानलक्षणाभिधानम् ]

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥

अन्यत्रानुवादाच्छब्दपुनरुक्तमर्थपुनरुक्तं वा । नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम् । अर्थपुनरुक्तं—अनित्यः शब्दो निरोधधर्मको ध्वान इति । अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः । यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति ॥ १४ ॥

अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥ १५ ॥

पुनरुक्तमिति प्रकृतम् । निदर्शनम् उत्पत्तिधर्मकमनित्यमित्युक्त्वा अर्थादापन्नस्यार्थस्य योऽभिधायकः शब्दः, तेन स्वशब्देन ब्रूयादनुत्पत्तिधर्मकं नित्यमिति । तच्च पुनरुक्तं निग्रहस्थानं भवति ॥ १५ ॥

[ अननुभाषणनिग्रहस्थानलक्षणम् ]

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १६ ॥

विज्ञातस्य वाक्यार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानमिति । अप्रत्युच्चारयन् किमाश्रयं परपक्षप्रतिषेधं ब्रूयात् ॥ १६ ॥

[अज्ञानरूपनिग्रहस्थानलक्षणम् ]



अविज्ञातं चाज्ञानम् ॥ १७ ॥

विज्ञातस्यार्थस्य परिषदा प्रतिवादिना च[1] त्रिरभिहितमपि यदविज्ञातं तदज्ञानं नाम निग्रहस्थानम्। अर्थं खल्वजानन् तस्य प्रतिषेधं[2] कथं ब्रूयात्? इति ॥ १७ ॥

[अप्रतिभालक्षणनिरूपणम्]

उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥

परपक्षप्रतिषेध उत्तरम्। श्लोकपाठादिभिरज्ञानमुत्पादयन् यदा तदुत्तरं न प्रतिपद्यते तदप्रतिभा नाम निग्रहस्थानम् ॥ १८ ॥

[विक्षेपनिग्रहस्थानलक्षणम्]

कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ १९ ॥

यत्र कर्तव्यं कार्यं व्यासज्य, कथां विच्छिनत्ति इदं मे करणीयं विद्यते, पश्चात्कथयिष्यामीति स विक्षेपो नाम निग्रहस्थानम् ॥ १९ ॥

['मतानुज्ञारूपनिग्रहस्थानलक्षणम्]

स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २० ॥

यः परेण चोदितं दोषमनुद्धृत्य भवतोप्ययं दोषः समान इति[3] परमतमनुजानाति, सा मतानुज्ञा। यथा भवांश्चोर इत्युक्ते भवानपि चोर इति ॥ २० ॥

---

[1] च × × × × × × × × × य

[2] धं × × ब्रू

[3] ति × × × × × × × × × सा

[पर्यनुयोज्योपेक्षणनिग्रहस्थानलक्षणम्]

निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥ २१ ॥

यो निग्रहस्थानप्राप्तं न निगृह्णाति, स निगृहीतो वेदितव्यः। निग्रहस्थानस्यापरिज्ञानात् इति ॥ २१ ॥

[निरनुयोज्यानुयोगलक्षणनिग्रहस्थानलक्षणम्]

अनिग्रहस्थाने निग्रहस्थानाभियोगो
निरनुयोज्यानुयोगः ॥ २२ ॥

निग्रहस्थानलक्षणस्य मिथ्याध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन् निरनुयोज्यानुयोगान्निगृहीतो वेदितव्यः ॥ २२ ॥

[अपसिद्धान्तरूपनिग्रहस्थानलक्षणकथनम्]

सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥

कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्य[1]यादनियमात् कथां प्रसञ्जयतोऽपसिद्धान्तः ॥ २३ ॥

[हेत्वाभासलक्षणनिग्रहस्थाननिरूपणम्]

हेत्वाभासाश्च यथोक्ता.[2] ॥ २४ ॥

यथैव विभक्ता लक्षणेन तथैव तेषां निग्रहस्थानभाव इति। ते

---

1 र्यं विपर्ययां द

2 सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः पूर्वमुक्ताः विभक्ताश्च।

खल्विमे प्रमाणादयः पदार्था उद्दिष्टाः प्रथमसूत्रे, लक्षिताः प्रथमेऽध्याये परीक्षिताः शेषेष्विति त्रिविधा तत्वस्य परिसमाप्तिरुक्ता वेदितव्या ।

जातीनां सप्तपञ्चानां निग्रहस्थानलक्षणम् ।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तितः ॥

इति न्यायसूत्रविवरणे पञ्चमेऽध्याये द्वितीयमाह्निकम् ।

समाप्तः पञ्चमोऽध्यायः

समाप्तश्चायं ग्रन्थः ।

---

# शुद्धाशुद्धपत्रिका

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | प्राङ्निवेदनभागे | |
| vi | 4 | ऋषिरिप्येव | ऋषिरित्येव |
| vi | 9 | ब्रह्मणीय | ब्राह्मणीय |
| vii | 12 | vysa | vyasa |
| vii | 14 | was pupil | was a pupil |
| ix | 19 | Pnblications | Publications |
| x | 3 | न्यायत्र | न्यायसूत्र |
| xi | 4 | अकसलय | अकस लय |
| xii | 3 | पदाथे | पदार्थै |
| xvi | 12 | ज्ञनं | ज्ञानं |
| | | अकारादिक्रमसूचीपत्रभागे | |
| 13 | 12 | न कशनखा | न केशनखा |
| | | न्यायसूचीनिबन्धभागे | |
| 35 | 17 | न्द्रियर्थाश्रयः | न्द्रियार्थाश्रयः |
| 36 | 5 | दुखम् | दुःखम् |
| 40 | 11 | वाभावो | स्वाभावो |
| 44 | 4 | तत्प्रामाण्ये ाव | तत्प्रामाण्ये वा |
| 45 | 12 | विकर | विकार |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 46 | 4 | ब्रह्मण | ब्राह्मण |
| 72 | 19 | केचिद् | कैश्चिद् |
| 74 | 6 | ज्ञानेछा | ज्ञानेच्छा |

न्यायसूत्रविवरणग्रन्थे

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 8 | 2 | प्रस्थनाः | प्रस्थानाः |
| 25 | 3 | ग्रह्ये | ग्राह्ये |
| 33 | 12 | शस्त्रम् | शास्त्रम् |
| 37 | 2 | सध्य | साध्य |
| 37 | 18 | सावच्धे | सावच्छे |
| 55 | 1-4 | ब्रह्मण्यं | ब्राह्मण्यं |
| | | ब्रत्येऽपि | ब्रात्येऽपि |
| | | ब्रह्मणो | ब्राह्मणो |
| | | ब्रह्मणे | ब्राह्मणे |
| 64 | 15 | वा यम | वानियम |
| 72 | 4 | तेनरम | तेनारम |
| 73 | 8 | तत्रपी | तत्रापी |
| 74 | 12 | संयाग | संयोग |
| 75 | 11 | मायोजि | मायोजिपत |
| 78 | 11 | संशयया | संशया |
| 79 | 13 | योसवे | योऽसावे |
| 93 | 9 | विधयकः | विधायकः |

| पृष्ठम् | पङ्क्तिम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 110 | 8 | तत्स्वर्थे | तत्स्वार्थे |
| 149 | 4 | श्मे | रश्मे |
| 157 | 1 | स्सर्शा | स्पर्शा |
| 162 | 8 | द्रव्याणम् | द्रव्याणाम् |
| 168 | 9 | अभीविषष्टयो | अभीष्टविषयो |
| 196 | 2 | निमित्तनौमि | निमित्तनैमि |
| 198 | 12 | भ्योघऽटगवादीनां | भ्योऽघटगवादीनां |
| 199 | 10 | प्रायुर्भा | प्रादुर्भा |
| 203 | 8 | पुनरिश्वरस्य | पुनरीश्वरस्य |
| 208 | 15 | परिणामोनगवदि: | परिणामोऽनागतादि: |
| 209 | 9 | स्यरूपत: | स्वरूपत: |
| 212 | 1 | स्वभव | स्वभाव |
| 213 | 15 | प्रतिज्ञातातार्थस्य | प्रतिज्ञातार्थस्य |
| 225 | 2 | त्वात्राच्चेति | त्त्वाच्चेति |
| 227 | 19 | त्नवत् | वत् |
| 241 | 16 | विशेषदर्शन | विशेषादर्शन |
| 246 | 5 | ग्निगदेनैव | निगदेनैव |
| 259 | 12 | नित्यधार्म्या | नित्यसाधर्म्या |
| 261 | 13 | प्रागुच्चरणा | प्रागुच्चारणा |
| 264 | 11 | नित्यमनित्वस्यस्य | नित्यमनित्यत्वस्य |
| 266 | 10 | प्रतिये हे | प्रतियेवहे |